श्रीकृष्णायनमः ।

# महाकविमयूरविरचितं सूर्यशतकम्[१] ।

## पञ्चनदीमाधवभट्टात्मजमधुसूदनभट्टविरचितटीकयोपेतम् ।

वंशीवादनरसिको गोपवधूहृदयपूर्णेन्दुः ।
वृन्दाविपिनविहारी जयति यशोदा यशोराशिः ॥१॥
शरदिन्दुकुन्दधवलामरविन्दविलोचनामभीष्टाप्त्यै ।
पद्मासनामभयदां वरदां प्रणमामि वाग्देवीम् ॥२॥
स्मृत्वा विघ्नविनायकमादरतोविघ्नसङ्घघाताय ।
नत्वा गुरुचरणानपि तदाश्रयादारभे कार्यम् ॥३॥
पञ्चनदान्वयजन्मा माधवभट्टात्मजो रवेः शतकम् ।
मधुसूदनो विवृणुते शिष्योऽत्रिकुलेन्दुबालकृष्णगुरोः ॥४॥
विद्यार्थिनां प्रबोधाय पदयोजनवर्त्मना ।
सङ्क्षिप्ता क्रियते व्याख्या तत्रास्तु विदुषां दया ॥५॥

अथ विद्वद्वृन्दविनोदाय श्रीमद्वृद्धवदनाद्विदितः, श्रीसूर्यशतकप्रादुर्भावप्रसङ्गस्तावत्प्रोच्यते । स यथा—मालवराजस्योज्जयिनीराजधानीकस्य कविजनमूर्द्धन्यस्य रत्नावल्याख्यनाटिकाकर्तुर्महाराजश्रीहर्षस्य सभ्यौ महाकवी पौरस्त्यौ बाणमयूरावास्ताम् । तयोर्मध्ये मयूरभट्टः श्वसुरो बाणभट्टः कादम्बरीग्रन्थकर्ता तस्य जामाता । तयोः कवित्वप्रसङ्गेन परस्परं स्पर्द्धासीत् । बाणस्तु पूर्वमेव कदाचिद्राजसमीपे समागतो राज्ञा महत्या सम्भावनया स्वनिकटे स्थापितः, कुटुम्बेन सहोज्जयिन्यां स्थितः। कियत्स्वपि दिनेष्वतीतेषु कवित्वप्रसङ्गे तत्पद्यानि श्रुत्वा मयूरभट्टो राज्ञा स्वदेशादाकारितः, शिष्यवृन्देन सहितो हयरथोष्ट्रदोलाभृत्यादिपरिकरेण सहोज्जयिनीमागतः। राज्ञा श्रुत्वा भोजनसामग्री च प्रेषिता। मयूरभट्टस्तत्र स्नानदेवपूजादिकं कृत्वा शिष्यैः परिवृतो भुक्त्वा सन्तोषेण

१ ध्येयः सदा सवितृमण्डलेत्यादिषूक्तस्य नारायणस्य स्तुतिरूपं शतकम् "सूर्यादिरूपधृक् ब्रह्मकाण्डे ज्ञानाङ्गमीर्यते" इति श्रीवल्लभाचार्यचरणोक्त्या ब्रह्मण एव तत्तद्रूपत्वम् । अन्तस्तद्धर्मोपदेशात्-भेदव्यपदेशाच्चान्यः इत्यत्रापि तथानिरूपणात् ।

स्थितः। अथ सायंसन्ध्यावन्दनानन्तरं मार्गश्रान्तो मन्दिरोपरिभागे ग्रीष्मोष्मापनयनायानावृतप्रदेशे पवनसञ्चारवति सुष्वाप। शिष्यजनोऽपि चरणसंवाहनव्यजनविचालनताम्बूलदानादिसेवां कृत्वा तदाज्ञयाऽन्यत्र गत्वा सुप्तः । अथ मयूरभट्टो मूहूर्त्ते उत्थाय देहशुद्धिं विधाय शुद्धे वाससी परिधाय परमात्मचिन्तनार्थमासने पूर्वाभिमुख उपविष्टः । अनन्तरं बाणभट्टस्य स्त्री मयूरभट्टपुत्री भर्तृशयनादुत्थाय मन्दिरोपरिभागात्सोपानमार्गेणावतरन्ती मयूरभट्टेन दृष्ट्वा चान्यस्त्रीभ्रमात्तादृग्रूपैर्बहुभिः पद्यैर्वर्णिता । तन्मध्ये एकमिदं पद्यं यथा–

“ का एषा भुक्तमुक्ता विलुलितरसना स्वेदलग्नाङ्गवस्त्रा
प्रत्यूषे याति बाला मृग इव चकिता सर्वतः शङ्कयन्ती ।
केनेदं वक्त्रपद्मं मधुमधुररसं खण्डितं केन पीतं
स्वर्गः केनाद्यभुक्तो हरनयनहतो मन्मथः कस्य तुष्टः ॥१॥

अनन्तरं सा सोपानैरवतीर्य गृहं प्रविष्टा । मयूरभट्टस्य त्वतिश्रोत्रियस्य देहे प्रामादिकपापादपि निर्मले वाससि मषीबिन्दुरिवाकस्मात्कुष्टं प्रादुरभूत् । स तु स्वदेहे वैकृतं दृष्ट्वा शीघ्रं मन्दिरादवतीर्य गृहस्यान्तर्वाससा देहमाच्छाद्योपविश्याचिन्तयत् । अहो किमिदमकस्मान्मद्देहे वैकृतमभूत्? आजन्म ज्ञानतः कृतं किमपि पापं न स्मरामि, अद्य प्रभाते परस्त्रीवर्णनादृते । भवतु परामर्शयामि तावदिति, प्रियशिष्यमाकार्यावोचत् । आयुष्मन्! त्वया गत्वा सम्यक् परामृश्याऽऽगन्तव्यमिदमस्मदावासनिकटे सप्तभूमं कस्य मन्दिरमिति । स तथेत्युक्त्वा, तत्र गत्वा, परामृश्य प्रत्यागत्योक्तवान् । गुरो! एतद्भवज्जामातुर्बाणभट्टस्य मन्दिरमिति । तच्छ्रुत्वा महान्तं विषादं प्राप्याचिन्तयत् । अहो सा मत्पुत्री मया भाग्यहीनेन वर्णिता। तस्येदं फलम्, भवत्वतःपरं श्रीसूर्यस्य स्तुतिं कृत्वा कुष्टं दूरीकृत्यैतस्य पापस्य देहान्तं प्रायश्चित्तं,करिष्यामीति निश्चित्य, प्रियशिष्यं प्रत्युक्तवान् । आयुष्मन्! मयैकं कार्यमाज्ञप्यते, तत्त्वया निर्विचारतया कर्त्तव्यमिति । तेन तथेत्युक्ते पुनरब्रवीत् । अद्य शनिवासरे मया उपवासः कर्त्तव्यः, अभ्यन्तरे स्थेयम् । यः कश्चिन्मद्दर्शनार्थी राजपुरुषोऽन्यो वा समागच्छेत्तं प्रति वक्तव्यं यद् “गुरुर्मार्गपरिश्रान्तः पूर्वेद्युर्निशि भुक्तवान् ,आहारापरिपाकादद्य ज्वरेण शिरोर्त्या च पीडितोऽन्तः सुप्तस्तिष्ठतीति” । त्वया च शिष्यवर्गेण सह समये सति देवपूजां कृत्वा भोक्तव्यम् । भृत्यवर्गाय हयवृषभादिभ्यश्चाऽऽहारो दापनीयः। गृहद्वार्येव स्थिरतया स्थेयम्, यथा कश्चिदविदितोन्तर्न

समायातु; शिष्यवर्गेऽप्यनाकारितेन केनापि मन्निकटे नागन्तव्यम्, त्वया च नातिदूरे स्थेयम् । अन्यच्च, त्वया शिप्रातीरे गत्वा विजने महान्तं वृक्षमालक्ष्य सायमन्धकारे तदुपरितनशाखायां शतरज्जुकं शिक्यं बन्धनीयम् । बहवः काष्ठ-भारास्तत्र प्रापणीयाः । अपररात्रे चतुर्भिः शिष्यैः खट्वायां सुप्तोऽहं मुमूर्षुरिव तस्मिन्स्थले नेयः। त्वयापि देवपूजासामग्रीं धौतोत्तरीये वाह्नं च गृहीत्वा तत्र गन्तव्यम् । अथ तेन तदुक्तं सर्वं तथैव कृतम् । मयूरभट्टोऽपरारात्रे शिष्यैः शिप्रातीरं प्रापितस्तानुक्तवान् । भवद्भिः शय्यामादाय दूरे गत्वा स्थेयम् । अनेन पथा यः कश्चिदागच्छेत् स निवारणीय इति । शिष्यैस्तथैव कृतम् । प्रियशिष्यस्तु निकटे स्थापितः । स्वयं च देहशुद्धिं विधाय स्नात्वा वृक्षतलं समागत्य स्थण्डि-लेऽग्निं प्रतिष्ठाप्येद्ध्वाऽलङ्कृत्य काष्ठभारानग्नौ क्षिप्त्वा, प्रियशिष्यं समीप आकार्य निजदेहमुद्घाट्य प्रदर्श्योक्तवान् । अहो, अकस्मान्मद्देहे कुष्ठमभूत्तन्निवृत्त्यै श्रीसूर्यो मया स्तूयते; त्वया नातिदूरे स्थेयम्, मया यत्पद्यं पठ्यते तदवधार्य, पत्रे लेख्यम् । इति श्रुत्वा स शिष्यो गत्वा समीपे स्थितवान् । अथ मयूरभट्टो वृक्षमारुह्य शिक्ये पूर्वाभिमुखस्तिष्ठन्नरुणोदये श्रीसूर्यं स्तोतुमारब्धवान् । एकं एकं पद्यं कृत्वा शिक्यस्यैकामेकां रज्जुमच्छिनत् । शिष्यः शतावधानी तदवधृत्य पत्रे लिलेख। पूर्वोदितरश्मिहयारुणरथमण्डलश्रीसूर्यवर्णनक्रमेण एकोनशतं पद्यानि कृतानि, तावन्त्यश्च शिक्यरज्जवच्छिन्नाः । अथ कथञ्चित् एकां रज्जुमवलम्ब्य शततमं पद्यं कृतवान् । तत्क्षणमेव तच्छरीरं कुष्टरहितमभूत् । तद्दृष्ट्वा श्रीसूर्यप्रसा-देनेदं सम्पन्नमिति मुदं प्राप्य देहान्तप्रायश्चित्तं कर्तुमवशिष्टां रज्जुं छेत्तुमारब्ध-वान् । तत्समये सन्तुष्टेन भगवता भास्करेणागत्य करयोर्धृत्वा भूमावुत्तार्य प्रोक्तस्त्वं निष्पापो जात इदानीं वरमन्यं याचस्वेति । अथ तेनोक्तं भगवन्ममा-यमेव वरो यदन्तर्यामी भवान्प्रत्यक्षीभूत इति । पुनर्भगवतोक्तं, प्रसन्नेन मया-ऽप्रार्थितमप्येतद्दीयते । पुरुषायुषजीवी, आजन्मनीरोग, ऐहिकान्सकलान्भोगा-न्भुक्त्वा देहान्ते तत्सायुज्यं प्राप्स्यसि, यश्चैतेन पद्यशतकेन मां स्तोष्यति स सर्वपापविमुक्त आरोग्यं, सत्कवित्वं, बुद्धिबलाधिक्यं, सौन्दर्यं, आयुः, सर्वश्रैष्ठ्यं विद्यां, प्रभुत्वं, द्रव्यं, सुखं च मत्प्रासादाल्लप्स्यत इत्युक्त्वा तस्य पश्यत एव भगवान्गगनमार्गमारूढः । मयूरभट्टोऽपि महानयं प्रसाद इति शतं साष्टाङ्गप्रणामा-न्कृत्वा श्रीसूर्यदत्तवरानुसारेण फलस्तुतिपद्यं कृतवान् । अनन्तरं माध्याह्निकं विधाय देवपूजां कृत्वा, प्रतिष्ठापितं वह्निं सम्पूज्य नत्वा विसृज्य शिष्यैः सह

हर्षितो निजावासमागत्यान्यानपि ब्राह्मणान्निमन्त्र्य भोजयित्वा शिष्यैः सह बुभुजे । हर्षेणानया वार्तया रात्रिमतिवाहितवान् । इयं वार्ता श्रीसूर्यप्रसादहृष्टस्य तस्य शिष्यैर्लोके प्रकाशीकृता ।

अथ प्रातः सुमूहूर्ते पुरोहितं पण्डितांश्च सम्प्रेष्य महताऽऽदरेण राज्ञा श्रीहर्षेण समाहूतो मयूरभट्टः शिष्यैः सह राजसमीपं गत्वा सूर्यशतकेनैव राज्ञ आशिषो दत्तवान् । राज्ञा चातिप्रसन्नेन गजाश्वरथग्रामवस्त्राभरणदोलामन्दिराद्यर्पणेन स्वनिकटे स्थापितः । स्वदेशात्कुटुम्बं समानाय्य राजदत्तमन्दिरे बाणभट्टवत् स्थितः । प्रत्यहं कवित्वैः श्रीहर्षं तोषयतिस्म । तदेवं श्रीसूर्यशतकं फलस्तुत्येकपद्योत्तरं प्रादुरभूत् ।

तत्राद्यं पद्यम्—

जम्भारातीभकुम्भोद्भवमिव दधतः सान्द्रसिन्दूररेणुं
रक्ताः सिक्ता इवौघैरुदयगिरितटी धातुधाराद्रवस्य ।
आयान्त्या तुल्यकालं कमलवनरुचे वारुणा वो विभूत्यै
भूयासुर्भासयन्तो भुवनमभिनवा भानवो भानवीयाः ॥१॥

भानवीयाः भानुसम्बन्धिनो भानवो रश्मयः वो युष्माकं विभूतये भूयासुः । कीदृशा भानवः अभिनवा नवीनाः प्रातःकालोद्भवाः । पुनः कीदृशाः भुवनं लोकं भासयन्तः प्रकाशयन्तः । पुनः कीदृशा रक्ता अरुणाः । अत्रोत्प्रेक्षते । कीदृशा इव जम्भेति । जम्भारातेरिन्द्रस्य य इभ ऐरावतस्तस्य कुम्भयोरुद्भवो यस्येदृशो यः सान्द्रः सिन्दूररेणुः तं दधत इव प्रथमं पूर्वस्यां दिश्युदितत्वात्तत्रस्थैरावत कुम्भस्थलस्य सिन्दूरसम्पर्कादेवारुणा इत्यर्थः । पुनः कीदृशा इव । उदयेति । उदयगिरेर्या तटी तस्या धातवो गैरिकमनःशिलाद्यास्तेषां या धारा तस्या द्रवो रसो निर्झरसम्बन्धेनेतस्ततः प्रसृतस्यौघैः प्रवाहैः सिक्ता इव । पुनः कीदृशा इव । आयान्त्येति । तुल्यकालं समकालमायान्त्या आगच्छन्त्या कमलवनानां रुचा कान्त्येवारुणाः । अत्रान्तिमपदे भकारानुप्रासः । भानूरश्मिदिवाकरावित्यमरः । भानोरिमे भानवीयाः । वृद्धाच्छ इति छप्रत्ययस्तस्यायनेत्यादिना ईयादेशः । अस्य पद्यशकतस्य स्रग्धराख्यच्छन्दः । तल्लक्षणं तु वृत्तरत्नाकरे । म्रभ्नैर्यानांत्रयेणत्रिमुनियतियुतास्रग्धरा कीर्तितेयमिति ॥ १ ॥

अथ द्वितीयं पद्यम्—

भक्तिप्रह्वाय दातुं कमलपुटकुटीकोटरक्रोडलीनाम्
लक्ष्मीमाक्रष्टुकामा इव कमलवनोद्घाटनं कुर्वते ये ।
कालाकारान्धकारानननिपतितजगत्साध्वसध्वंसकल्पाः
कल्याणं वः क्रियासुः किसलयरुचयस्ते करा भास्करस्य ॥२॥

भास्करस्य ते करा अंशवो वः कल्याणं क्रियासुः । कीदृशाः किसलयरुचयः प्रथमोदितत्वेन नवीनकमलदलवदारक्ताः । अन्येषामपि सल्लक्षणवतां करा आरक्ता भवन्तीत्यौचित्युद्घाटनाकर्षणदानभीतत्राणान्यपि करकार्यमेवेत्यपि च । ते के ये कमलवनोद्घाटनं[1] कुर्वते । अत्रोत्प्रेक्षते । किम्भूता इव । भक्तिप्रह्वाय भक्तिनम्राय जनाय दातुं लक्ष्मीमाक्रष्टुकामा इव । कीदृशीं लक्ष्मीम् । कमलपुटेति । कमलस्य यत्पुटं मध्यं सैव कुटी तस्याः कोटरमतिगभीरत्वान्निःकुहूतुल्यमभ्यन्तरं तस्य क्रोडमन्तरं तत्र लीनाम् । गृहाभ्यन्तरे निलीय स्थितां लक्ष्मीं बलादाकृष्य भक्ताय दातुकामा इत्यर्थः । पुनः कीदृशाः । कालेति । कालाकारः कृष्णवर्णो यः कालः कृतान्तस्तत्तुल्यो जगद्ग्रासितत्वात् । ईदृशो योऽन्धकारः, तदानने पतितं यज्जगत्तत्साध्वसध्वंसकल्पाः सज्जाः सावधाना इति यावत् । उद्घाटनमिति घटसङ्घाते इत्यस्य चौरादिकस्यामितो भावे ल्युटिरूपम् । कल्पौ सज्जनिरामयावित्यमरः । अलिहस्तांशवः करा इत्यपि । कृतांतानेहसोः काल इति च । कल्पा इति ओष्ठ्योपधपाठस्त्वनाकरः । अश्ववलानुप्रासभङ्गप्रसङ्गात् ॥ २ ॥

अथ तृतीयं पद्यम्—

गर्भेष्वम्भोरुहाणां शिखरिषु च शिताग्रेषु तुल्यं पतन्तः
प्रारम्भे वासरस्य व्युपरतिसमये चैकरूपास्तथैव ।
निष्पर्यायं प्रवृत्तास्त्रिभुवनभवनप्राङ्गणे पान्तु युष्मा—
नूष्माणं सन्तताध्वश्रमजमिव भृशं बिभ्रतो ब्रध्नपादाः ॥३॥

ब्रध्नस्य सूर्यस्य पादा रश्मयो युष्मान्पान्तु । कीदृशाः । गर्भेष्विति । अम्भोरुहाणां गर्भेषु अन्तर्भागेषु शिताग्रेषु तीक्ष्णा येषु शिखरिषु तरुषु पर्वतेषु तुल्यं समकालमेव पतन्तः । पुनः कीदृशाः । प्रारम्भ इति । वासरस्य प्रारम्भे । आदौ तथैव व्युपरति समये समाप्तिकाले च तुल्यरूपाः कोमलत्वेना-

रुणाः । पुनः कीदृशाः । निष्पर्यायमिति । त्रिभुवनमेव भवनं तस्य प्राङ्गणं मध्यभागस्तस्मिन्निष्पर्यायमक्रममेकदैव प्रवृत्ताः । अन्येषां पादास्तु क्रमेणैव प्रवर्तन्ते । एते तु विलक्षणा इत्यर्थः । पुनः कीदृशाः । भृशमत्यर्थं ऊष्माणं बिभ्रतः । कीदृशा इव सन्तताध्वश्रमजत्वेनोत्प्रेक्ष्यते । तरुशैलौ शिखरिणावित्यमरः । पादारम्यङ्घ्रितुर्यांशा इत्यपि ॥ ३ ॥

अथ चतुर्थं पद्यम्—

प्रभ्रश्यत्युत्तरीयत्विषि तमसि समुद्वीक्ष्य वीतावृतान्प्राग्
जन्तूंस्तन्तून् यथा या नतनु वितनुते तिग्मरोचिर्मरीचीन् ।
ते सान्द्रीभूय सद्यः क्रमविशददशाशादशालीविशालम् ।
शश्वत्सम्पादयन्तोऽम्बरममलमलं मङ्गलं वो दिशन्तु ॥ ४ ॥

ते मरीचयो वो [1]युष्माकमलमत्यर्थं मङ्गलं दिशन्तु ददतु । ते के तिग्मरोचिः सूर्यः प्राक् यान्मरीचीनतनु बहु यथास्यादेवं वितनुते विस्तारयति । क इव तन्तून्यथा तन्तूनिव । किं कृत्वा, जन्तून्प्राणिनो वीतावृतान्निरावरणान्वीक्ष्य । कस्मिन्सति । उत्तरीयत्विषि उत्तरीयतुल्ये तमसि प्रभ्रश्यति सति । निरावरणान्प्राणिनो वीक्ष्य दयया तदावरणाय तन्तुरूपान्प्रसारितवानित्यर्थः । ते कीदृशाः । सद्यः सान्द्रीभूय अमलमम्बरमाकाशं वस्त्रं च सम्पादयन्तः । मरीचि पक्षे अमलमिति विधेयविशेषणम् । अम्बरमाकाशं निर्मलं कुर्वन्त इति । तन्तुपक्षे विशदं स्वच्छमम्बरं वस्त्रं सम्पादयन्त इति । कीदृशमम्बरम् । क्रमेणेति । क्रमेण विशदा या दशाशाः दशदिशस्ता एव दशाल्योदशानां वस्त्रप्रान्तानां तिर्यगा यामतन्त्यश्चरन्त्य आल्यः पङ्क्तयः, ताभिर्विशालम् । अन्यस्याप्यम्बरस्य प्रान्ते दशा भवन्ति । यद्यपि पूर्वार्द्धोक्त्यनुसारेणैवं वक्तव्यम् । यांस्तन्तुरूपान् मरीचीन् तिग्मरोचिर्वितनुते तैरम्बरं सम्पादयन्निति । तथापि सुकरगुणवत्वेन कर्मकर्त्तरीव कर्मण एव कर्तृत्वेनोत्तरार्द्धे निरूपणम् । मरीचिः स्त्रीपुंसयोरिति । अम्बरं व्योम्नि वाससोत्यमरः ॥ ४ ॥

अथ पञ्चमं पद्यम्—

न्यक्कुर्वन्नोषधीशो मुषितरुचि शुचेवौषधीः प्रोषिताभा
भास्वद्ग्रावोद्गतेन प्रथममिव कृताभ्युद्गतिः पावकेन ।

1 युष्मभ्यंवा

पक्षच्छेदव्रणास्रस्नुत इव दृषदो दर्शयन् प्रातरद्रे-
रातास्रस्तीव्रभानोरनभिमतनुदे स्तादु गभस्त्युद्गमो वः ॥५॥

तीव्रभानोरुष्णरश्मेर्गभस्त्युद्गमः किरणोदयो वो युष्माकं अनभिमतनुदे अनिष्टनिरसनाय स्तात् भवतु । किं कुर्वन् । ओषधीशे चन्द्रमसि मुषितरुचि अपहृतकान्तौ सति । शुचेव स्वप्रभुकान्त्यपहृति शोकेनैव प्रोषिताभा अपगतदीप्तीरोषधीर्न्यक्कुर्वन्नन्यदीप्तीरसहनतया तिरस्कुर्वन् । कीदृशः भास्वदिति । भास्वद्ग्रावा सूर्यकान्तोपलः, तत उद्गतेन पावकेन प्रथमं पूर्वमेव कृताभ्युद्गतिरिव । ओषधीशस्यौषधिप्रभृतीनां च तिरस्कारदर्शनाद्भीत्या पावकेन स्वरक्षार्थं कृताभ्युद्गतिरित्यर्थः । पुनः किं कुर्वन् । प्रातःकाले अद्रेरुदयपर्वतस्य दृषदः शिलाः ताभ्यः पक्षच्छेदव्रणास्रस्नुत इव । इन्द्रेण पूर्वं कृतो यः पक्षच्छेदस्तस्य यो व्रणः तद्रुधिरस्राविणीरिव दृषदो दर्शयन् । कीदृशः । आताम्र आरक्तः । अत एव तद्व्याप्तशिलादर्शनात् लोकानां रुधिरस्रावभ्रमो भवतीत्यर्थः ॥५॥

अथ षष्ठं पद्यम्

शीर्णघ्राणाङ्घ्रिपाणीन् व्रणिभिरपघनैर्घर्घराव्यक्तघोषान्
दीर्घघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन्यः ।
घर्मांशोस्तस्य योन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्ते-
र्दत्तार्घाः सिद्धसङ्घैर्विदधतु घृणयः शीघ्रमंहोविघातम् ॥६॥

तस्य घर्मांशोरुष्णरश्मेः घृणयः किरणाः वो युष्माकं शीघ्रमंहोविघातं पापविहतिं विदधतु । तस्य कस्य । यः एकः अद्वितीयः । ईदृशान्नरान् उल्लाघयन्नीरोगान्कुर्वन्पुनरपि घटयति घ्राणादिभिर्योजयति । कीदृशान् । शीर्णेति । कुष्ठादिरोगेन शीर्णाः घ्राणान्यङ्घ्रयः पाणयश्च येषां तान् । पुनः कीदृशान् । व्रणिभिर्व्रणवद्भिरपघनैरवयवैरुपलक्षितानिति शेषः । पुनः कीदृशान् । घर्घरः घर्घरानुकरणः । अव्यक्तश्च घोषो भाषणध्वनिर्येषां तान् । पुनः कीदृशान् । दीर्घेति । अघौघैः पापस्य समूहैर्दीर्घघ्रातान्दीर्घं चिरकालम् स्वसेवनात्पूर्वमा घ्रातान्फलप्रकटनेन व्यस्तान् । कथंभूतस्य घर्मांशोः । अन्तरिति । अन्तर्हृदये द्विगुणा घना निबडा या घृणाऽदया तन्निघ्नात दधीतानिर्विघ्नाऽप्रतिहता वृत्तिर्यस्य निजसेवके दयार्द्रहृदयतया तद्व्याधिनिरसनाय शीघ्रं प्रवर्तमानस्येत्यर्थः । कीदृशा

घृणयः । सिद्धसङ्घैरुदयगिरिस्थितैः प्रातःसन्ध्यायां दत्तोऽर्घो येभ्यस्ते । अङ्घ्रिपाणीनित्यक्षरानुप्रासभ्रमाद्घकारस्यापाठस्त्वनाकरः । अङ्घ्रिपाणीनित्येव पाठः । अहिगताविति धातोरौणादिकरिप्रत्ययेन तत्सिद्धेः । किञ्च । नात्यन्तमनुप्रासहानिरपि हकारस्य घोषत्वादिगुणवत्वेन घकारस्यापि तादृक्त्वेन साधर्म्यात् । अत एव विघातमित्यत्र पुनः कविना हकार एव प्रयुक्तः । उल्लाघयन्नीरोगं कुर्वन् उल्लाघशब्दोऽनुपसर्गात फल्लोत्यादिना निपातितः । ततस्तत्करोतिणिजंताच्छतृप्रत्ययः उल्लाघोनिर्गतो गदादित्यमरः । अधीनो निघ्न इत्यपि । गभस्तिघृणिरश्मयः इति च । अत्र पद्ये घकारानुप्रासः ॥ ६ ॥

अथ सप्तमं पद्यम्—

**बिभ्राणा वामनत्वं प्रथममथ तथैवांशवः प्रांशवो वः**
**क्रान्ताकाशान्तरालास्तदनु दशदिशः पूरयन्तस्ततोऽपि ।**
**ध्वान्तादाच्छिद्यतेव द्विष इव बलितो विश्वमाश्वश्नुवाणाः**
**कृच्छ्राण्युच्छ्रायहेलाप्रहसितहरयो हारिदश्वा हरन्तु ॥७॥**

हारिदश्वाः हरिदश्वसम्बन्धिनोंशवः कृच्छ्राणि कष्टानि हरन्तु । कीदृशा अंशवः । उच्छ्रायेति । उच्छ्रायस्योन्नतस्य हेला लीला तया प्रहसितो हरिर्विष्णुर्यैस्ते । विशेषणैः । हरिसाम्यमाह । प्रथमं प्रातःकाले स्वल्पप्रदेशप्रसृतत्वेन वामनत्वं ह्रस्वत्वं बिभ्राणाः । हरिरपि पदपरिमितभूमियाचनात्पूर्वं वामनत्वं धृतवान् । पुनः कीदृशाः, अथ अनन्तरं तथैव हरिवत्प्रांशवे उन्नताः । पुनः कीदृशाः । क्रान्तम्, आकाशस्यान्तरातलमभ्यन्तरं यैस्ते तथा हरिरपि तादृक् । तदनुदशदिशः पूरयन्तो निजदेहेन हरिरपि तद्वत् । ततोऽपि तदनन्तरमपि ध्वान्ताद्विश्वं त्रैलोक्यमाच्छिद्य बलाद् गृहीत्वा आशु शीघ्रमश्नुवानाः । सर्वत्र व्याप्नुवन्तः कस्मादिव बलितः बलेर्दैत्यराजादिव । हरिरपि बलेस्त्रैलोक्यमाच्छिद्याशु सर्वत्र व्याप्तवान् । कीदृशाद् बलेर्देवद्विषः देवानामिन्द्रादीनां द्विड्वैरी तस्मात । कीदृशादन्धकारात् । देवद्विषः देवानामिन्द्रियाणां नेत्रादीनां द्विषः तत्र तेषां स्वस्वव्यापाराक्षमत्वात् । एवं तावदंशूनां हरिसाम्यम् । तत्प्रहासहेतुस्तु हरिः सकृत्तथा कृतवानेते तु प्रत्यहं सर्वमत्यक्षमेवं कुर्वन्तीति तत उत्कर्ष एतेषाम् । देवाः सुरे घने राज्ञि देवमाख्यातमिन्द्रियमिति विश्वः ॥ ७ ॥

अथाष्टमं पद्यम्—

उद्गाढेनारुणिम्ना विदधति बहलं येऽरुणस्यारुणत्वम्
मूर्द्धोद्धूतैः खलनक्षतरुधिररुचो ये रथाश्वाननेषु ।
शैलानां शेखरत्वं श्रितशिखरिशिखास्तन्वते ये दिशन्तु
प्रेङ्खन्तः खे खरांशोः खचितदिनमुखास्ते मयूखाःसुखं वः ॥८॥

खरांशोरुश्मरश्मेस्ते मयूखा वः सुखं दिशन्तु । ते के? ये उद्गाढेनातिमात्रेणारुणिम्ना अरुणत्वेन अत्यन्त आरक्तेन, अरुणस्य सारथेः स्वतोऽरुणस्य बहुलं निविडमरुणत्वं विदधति । पुनर्ये रथाश्वानामाननेषु मूर्द्धोद्धूतैर्हेतुभिर्यत्खलीनस्य कविकाया मध्यदेशभाषया करियारीति प्रसिद्धायाः, क्षतम्, तद्रुधिरस्येव रुक् कान्तिर्येषां ते तथा पुनर्ये शैलानां शेखरत्वं रक्तकुसुमकृतशिखामाल्यत्वं तन्वते । ते कीदृशाः श्रितेति । श्रिताः शिखरिणां वृक्षाणां शिखाः प्रान्तायैस्ते । तथा, प्रातःकाले प्रथमं ख आकाशे प्रेङ्खन्त इतस्ततस्त्वरया प्रसरन्तः । पुनः कीदृशाः । प्रातः काले प्रथमं पर्वताग्रेषु वृक्षाग्रेषु प्रसृताः इत्यर्थः । पुनः कीदृशाः । खचितं व्याप्तं दिनमुखं यैस्ते तथा । 'शिखास्त्रापीडशेखरौ' इत्यमरः । 'तरुशैलौ शिखरिणौ' इति च । अत्र खकारानुप्रासः ॥ ८ ॥

अथ नवमं पद्यम्—

दत्तानन्दाः प्रजानां[1] समुचितसमयाकृष्टसृष्टैः पयोभिः
पूर्वाह्णेविप्रकीर्णा दिशि दिशि विरमत्यह्नि संहारभाजः ।
दीप्तांशोर्दीर्घदुःखप्रभवभवभयोदन्वदुत्तारनावो
गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु ॥९॥

दीप्तांशोः सूर्यस्य गावो मरीचयो धेनवश्च वो युष्माकमपरिमितां प्रीतिमुत्पादयन्तु । कीदृश्यः दत्तेति । समुचितसमये आकृष्टैः संगृहीतैः सृष्टैर्विसृष्टैः स्वपयोभिर्जलैर्दुग्धैश्च प्रजानां दत्त आनन्दो याभिस्ताः । मरीचयोऽष्टगसङ्गृह्य चातुर्मास्ये जलानि विसृजन्ति, धेनवोऽपि दिवारात्रौ च सङ्गृह्य सन्ध्ययोर्दुग्धानि प्रयच्छन्ति । पुनः कीदृशाः । पूर्वाह्ण इति । अह्नः पूर्वभागे दिशि दिशि विप्र-

[1] अत्र प्रजाभ्य इतिसाधु ।

कीर्णाः। अह्नि विरमत्यवसानं गच्छति सति संहारं समाहारमेकीभावं भजन्तीति तथा मरीचयः। सर्वत्र दिवा प्रसृत्य सन्ध्यायां द्वीपान्तरगमनार्थमेकीभावं गच्छन्ति धेनवोऽपि दिने चरणार्थमह्नि परिभ्रम्य सायं गोष्ठागमनार्थमेकीभावं भजन्ति। पुनः कीदृश्यः। दीर्घेति दीर्घं चिरकालानुवात यद्दुःखं तस्य प्रभवो यस्मिन्नीदृशो यो भवः संसारस्तस्माद्यद्भयं तदेवोदन्वान्समुद्रोऽपारस्त्वा-त्तदुत्तारे संसारिणां नौरूपाः। पुनः कीदृश्यः। पावनानां मध्ये परं श्रेष्ठं पावनम्। अजहल्लिङ्गवचनमिदं पदम्। अत्र मरीचीनां गवां विशेषणैःस्तुतित्वेनोक्तिश्चमत्कृतिः। धेनवोऽपि सूर्यादुत्पन्नाः। तदुक्तं बृहस्पतिस्मृतौ—"अग्नेरपत्यं प्रथमं सुवर्णं भूर्वैष्णवी सूर्यसुताश्च गावः" इति। पावनानां इति निर्धारणे षष्ठी। "पयः क्षीरं पयोम्बु च" इत्यमरः। अत्र वकारानुप्रासः ॥ ९ ॥

अथ दशमं पद्यम्—

बन्धध्वंसैकहेतुं शिरसि नतिरसावद्धसंध्याञ्जलीनां
लोकानां ये प्रबोधं विदधति विपुलाम्भोजखण्डाशये च।
ते युष्माकं स्वचित्तप्रथिमपृथुतरप्रार्थनाकल्पवृक्षाः
कल्पन्तां निर्विकल्पं दिनकरकिरणाः केतवः कल्मषस्य ॥१०॥

ते दिनकरकिरणाः निर्विकल्पं निर्विचारं युष्माकं स्वचित्तस्य प्रथिमा औन्नत्यं तेन पृथुतरा महती या प्रार्थना मनोनुरूपाऽभ्यर्थना तस्याः कल्पवृक्षा इव दातारः कल्पन्तां भवन्तु। ते के? ये लोकानां जनानां विपुलानामम्भोजखण्डानां कमलसमूहानामाशये मध्ये च प्रबोधं विदधति। लोकपक्षे ज्ञानं जागरणञ्च। कमलपक्षे विकाशम्। कीदृशानां लोकानां शिरसीति। शिरसि नतिरसे नमस्कारप्रिय आवद्धः सन्ध्याञ्जलिर्यैस्तेषाम्। कीदृशं प्रबोधम्? बन्धेति। लोकपक्षे संसारबन्धध्वंसैकहेतुम्। कमलपक्षे दलसम्पुटबन्धनिरासहेतुम्। पुनः कीदृशा दिनकरकिरणाः। कल्मषस्य पापस्य केतवो दुस्थानस्थितकेतुग्रहवन्नाशकाः। "ग्रहभेदे ध्वजे केतुः" इत्यमरः। "अब्जादिकदम्बे षंडमस्त्रियाम्" इति च। अत्रोत्तरार्द्धे ककारानुप्रासः ॥ १० ॥

अथ एकादशं पद्यम्

धारा रायो धनायापदि सपदि करालम्बभूताः प्रपाते
तत्त्वालोके[1] प्रदीपास्त्रिदिव[2]पतिपुरप्रस्थितौ वीथ्य एव ।
निर्वाणोद्योगियोगिप्रगमनिजतनुद्वारि वेत्रायमाणा-
स्त्रायन्तां तीव्रभानोर्दिवसमुखसुखा रश्मयः [3]कश्मलाद्वः ॥११॥

तीव्रभानोरुष्णरश्मे रश्मयो वो युष्मान् कश्मलात्पापात्त्रायन्ताम् । ते कीदृशाः । धारा इति धनायायामापदि निजभक्तलोकस्य सपदि रायो धनस्य धाराः प्रवाहाः । पुनः कीदृशाः । प्रपाते स्खलने प्रयाते इतिपाठे गमने सपदि करालम्बभूताः हस्तावलम्बन इव । पुनः कीदृशः तत्त्वेति । तत्त्वस्य परब्रह्मयाथार्थ्यस्यालोके प्रकाशे मुख्या दीपाः । पुनः कीदृशाः । त्रिदिवेति । त्रिदिवपतिरिन्द्रस्तस्य पुरं स्वर्गस्तत्प्रस्थितौ वीथ्यो मार्गरेखा इव । । पुनः कीदृशाः । निर्वाणेति । निर्वाणे मोक्षे उद्योगिनः सोद्यमा ये योगिनस्तेषां प्रगमः प्रकृष्टं पुनरावृत्तिरहितं गमनस्थानं, या निजतनुः सूर्यमण्डलं तद्वारि वेत्रायमाणाः वेत्रवदाचरन्तः । तद्गमनानधिकारिनिवारणायेत्यर्थः । अत्र वेत्रशब्देन लक्षणया वेत्रधरा दौवारिका उच्यन्ते । कुन्ताः प्रविशन्तीतिवत् । यद्वा वेत्रवन्तो वेत्राः । अर्शआदित्यादच् । योगिनस्तावद्द्विविधाः, एके सिद्धिकामा अन्ये मुक्तिकामाः, पूर्वे तु योगबलेन दिव्यं देहं सम्पाद्य भोगान्भुञ्जाना लोकेषु स्वेच्छया भ्रमन्ति । तेषां प्रमादेन कदाचित्पुनः संसारासक्त्या जन्ममरणादि भवन्ति । ते तु सूर्यमण्डलं प्राप्तुं न शक्नुवन्ति । ये तु निर्वाणोद्युक्तास्ते सूर्यमण्डलद्वारा मोक्षं गच्छन्ति । पुनः कीदृशा रश्मयः । दिवसमुखसुखाः । दिवसस्य मुखे आरम्भे सुखाः । दृष्ट्युपघातत्वाभावाद्ये सुखकारिणः । "अथ त्रिषु द्रव्ये पापं पुण्यं सुखादि च"इत्युक्तत्वात्सुखशब्दस्य द्रव्यवाचकत्वेन वाच्यलिङ्गत्वम् । शब्दसाधनं तु सुखङ्कुर्वन्तीत्यर्थे सुखशब्दाण्णिचि तदन्तात्पचाद्यचि सुखा इति । कल्मषाद्व इति पाठस्त्वनुप्रासभङ्गादुपेक्ष्यः । "गर्द्धो धनाया" इत्यमरः (?) । प्रगमेति । प्रकर्षेण गम्यतेऽस्मिन्निति यथा कथञ्चित्संज्ञामाश्रित्य पुंसि संज्ञायामित्यधिकरणार्थे प्रत्ययः । यद्वा कृत्यल्युटो इत्यत्र कृत्सुभवाः कृत्या

---

१ तत्त्वालोकैकदीपा इत्यपि पाठः २ त्रिदशेत्यपि पाठः ३ कल्मषाद्व इत्यपि पाठः

इतिव्युत्पत्तिमाश्रित्य वृद्दनिश्चिगमश्चेत्यधिकरणे अपगम इति सिद्धे प्रकृष्टोगमः प्रगम इति प्रादिसमासः । अत्र केचन अघनायेति पदं छिन्दन्ति, आपद्घनाय निर्द्धनाय या धारा इति च टिप्पणं कृतं तत्तु चतुर्थ्यां असमर्थद्धनायाशब्दाज्ञानमूलकत्वेनोपेक्ष्यम् ॥ ११ ॥

अथ द्वादशं पद्यम्—

प्राचि प्रागाचरन्त्योऽनतिचिरमचले चारु चूडामणित्वं
मुञ्चन्त्यो रोचनाम्भः प्रचुरमिव दिशामुच्चकैश्चर्चनाय ।
चाटूक्तैश्चक्रनाम्नां चतुरमविचलैर्लोचनैरर्च्यमाना
श्चेष्टन्तां चिन्तितानामुचितमचरमाश्चंडरोचीरुचो वः ॥१२॥

अचरमाः प्राक्तन्यः चण्डरोचीरुचः सूर्यस्य कान्तयो वश्चिन्तितानां वाञ्छितानामर्थानामुचितं योग्यं यथाभवत्येवं चेष्टन्ताम्, वाञ्छितार्थदाने प्रवर्तन्ताम् । कीदृश्यः । प्राचि अचले पूर्वपर्वते प्राक्पूर्वं चारुचूडामणित्वं समीचीन।शरीरत्नभावमनतिचिरमल्पकालमाचरन्त्यः । पुनः कीदृश्यः । दिशां दिग्वधूनां चर्चनाय सेचनाय प्रचुरं रोचनम्भः कुङ्कुमाम्भ उच्चकैर्मुंचन्त्यः क्षिपन्त्य इव । पुनः कीदृश्यः । चाटूक्तैरिति । चक्रनाम्नां चक्रवाकानां चाटूक्तैः प्रियवचनैरविचलैर्निश्चलैर्लोचनैश्च चतुरम् यथा भवत्येवं सादरमर्च्यमानाः पूज्यमानाः । तेषां रात्रिकृतपरस्परविरहपीडायुताक्षैः प्रियोक्तिपूर्वकं सादरमवलोक्यमाना इत्यर्थः । चण्डरोचीरुचिरित्यत्र षष्ठीतत्पुरुषे सति रोरीति रलोपे ढूलोप इति दीर्घः । अत्र चकारानुप्रासः ॥ १२ ॥

अथ त्रयोदशं पद्यम् ।

एकं ज्योतिर्दृशौ द्वे त्रिजगति गदितान्यब्जजास्यैश्चतुर्भिर्भूतानां पञ्चमं यान्यलमृतुषु तथा षट्सु नानाविधानि ।
युष्माकं तानि सप्तत्रिदशमुनिनुतान्यष्टदिग्भांजि भानोर्यान्ति प्राह्णे नवत्वं दश ददतु शिवं दीधितीनां शतानि ॥१३॥

भानोस्तानि दीधितीनां दशशतानि युष्माकं शिवं ददतु । तानि कानि ।

यानि सृष्टेः पूर्वं परब्रह्मतेजोरूपत्वेनैकं ज्योतिः। रूपकमिदम्। एवमग्रेऽपि। पुनः सृष्ट्यनंतरं विराड्रूपस्य भगवतः सूर्यचंद्ररूपे दृशौ नेत्रे। पुनः कीदृशानि, त्रिजगतीति त्रयाणां जगतां समाहारस्त्रिजगत् त्रिलोकी तत्र चतुर्भिरब्जजास्यैः अब्जजो भगवन्नाभिकमलजो ब्रह्मा तदास्यैर्गदितानि स्तुतानि। पुनः भूतानां पञ्चानां पृथिव्यादीनां मध्ये पञ्चमं तेजस्तद्रूपाणि। तथा यानि षट्सु अलमत्यर्थं नानाविधानि शीतोष्मवातवर्षादि तत्तदृतुधर्मरूपेण सूर्यकिरणा एव परिणमन्तीति पुराणोक्तेः। पुनः कीदृशानि। सप्तेति। सप्त ये त्रिदशमुनयो देवर्षयः सप्तर्षयस्तैर्नुतानि स्तुतानि। पुनः कीदृशानि। अष्टदिग्भाञ्जि अष्टदिशो भजन्तीति तथा क्रमेण सर्वत्र प्रसृतानीत्यर्थः। पुनः प्रा ्णे पूर्वाह्णे नवत्वं नवीनत्वमर्थांतरे नवसंख्याकत्वञ्च यान्ति। वृद्धिक्षयहीनत्वेन संदेहरूपाण्यपि लोकप्रतीत्या प्रातरभिनवानीव भांतीत्यर्थः। यान्तीतिशब्दन्तं पदम्। अत्र एकनआरम्भक्रमेण दशपर्यंतकथनं चातुर्यम्॥ १३॥

अथ चतुर्दशं पद्यम्।

**आवृत्तिभ्रान्तविश्वाः श्रममिव दधतः शोषिणः स्वोष्मणेव**
**ग्रीष्मे दावाग्नितप्ता इव रसमसकृद्ये धरित्र्या धयन्ति।**
**ते प्रावृष्यात्तपानातिशयरुज इवोद्वांततोया हिमर्त्तौ**
**मार्त्तण्डस्याप्रचण्डाश्चिरमशुभभिदेऽभीषवो वो भवन्तु॥१४॥**

ते मार्त्तंडस्याभीषवः किरणाश्चिरं वोयुष्माकमशुभभिदे अमंगलच्छेदाय भवन्तु। ते कीदृशाः आवृत्तीति। आवृत्त्या पौनःपुन्येन भ्रान्तमतिक्रान्तं विश्वं जगद्यैस्ते तथा। अत एव श्रमं मार्गभ्रमणजं दधत इव। पुनः स्वोष्मणा स्वकीयेन श्रमजेनोष्मणा शोषिण इव। संजातहृत्तालुमुखशोषा इव। पुनर्दावाग्नितप्ता इव। मध्ये मार्गमरण्यवह्नितप्ता इव। ग्रीष्मे धरित्र्या रसमसकृन्निरन्तरं ये धयन्ति पिबन्ति। आत्तपामेति आत्ता स्वीकृता पानातिशयेन रुक्छर्दिरूपा यैरीदृशा इव। प्रावृषि वर्षर्तौ उद्वांततोया उद्गीर्णपीतजलाः। पुनर्हिमर्त्तौ हेमन्तेऽप्रचण्डा निर्बलाः। अत्रापि इवेत्यस्य संबन्धः। लुप्तोत्प्रेक्षया वा अयमर्थः। इयं तावल्लोकव्यवस्था, यः पथिकः सर्वदाहर्निशं चलति स मार्गखेदोष्मणा दावाग्नितापेन च जाततर्षो जलस्यातिपानं करोति तेन तस्य छर्दिरोग उत्पद्यते

तत्पीडितः स कृशो भवतीति। कविना लोकस्थितिं दृष्टान्तीकृत्य दृष्टिविशेषभंग्या सूर्याभीषूणां स्तुतिरेव क्रियते। अष्टसु मासेषु सर्वरसं संगृह्य वर्षर्त्तौ त्रिनिर्गलं विसृजन्तीतितात्पर्यम्। अन्येषामसाध्यसर्वरोगनिवर्त्तकत्वेन प्रख्यातप्रतापाः सूर्याभीषवोतिप्रचण्डा एव। हिमर्त्तौ दक्षिणायनवातनः। तेन तेषां दूरसंचाररूपकारणत्वेन लोकेऽप्रचंडा इव प्रतीयन्त इति। "अभीषुः प्रग्रहे रश्मौ"इत्यमरः॥ १४॥

अथ पञ्चदशं पद्यम्।

तन्वाना दिग्वधूनां समधिकमधुरालोकरम्यामवस्था-
मारूढप्रौढिलेशोत्कलितकपिलिमाङ्कृतिः केवलैव।
उज्जृम्भांभोजनेत्रद्युतिनि दिनमुखे किंचिदुद्भिद्यमाना
श्मश्रुश्रेणीव भासां दिशतु दशशती शर्म घर्मत्विषो वः॥१५॥

घर्मत्विष ऊष्णरश्मेः, भासां दशशती वः शर्म दिशतु। अत्रोत्प्रेक्षते केव। दिनमुखे किञ्चिदुद्भिद्यमाना प्रकटीभवन्ती श्मश्रुश्रेणीव। दिक्षु वधुत्वं दिने तन्नायकत्वं चारोप्य तस्मिन्यौवनोद्भिदं वर्णयति। कीदृशी श्मश्रुश्रेणी दिग्वधूनामिति। दिग्रूपाणां वधूनां नायिकानां समधिकं मधुरो य आलोको दर्शनं प्रकाशश्च तेन रम्यामवस्थां तन्वाना विस्तारयन्ती, वधूनामधिकं प्रीत्युत्पादिका भवन्तीत्यर्थः। पुनः कीदृशी। आरूणेति। आरूढः प्राप्तो यः प्रौढिलेशः इषत्प्रौढता तेन उत्कलितोऽवलंबितः कपिलिमा पिंगलत्वं यया। श्मश्रुश्रेणी प्रथमोत्पत्तौ किञ्चित्प्रौढ्या कपिलवर्णा जायत इत्यनुभवसिद्धम्। पुनः कीदृशा। केवलैव अन्यानपेक्षालंकृतिर्मुखस्याभरणं श्मश्रूद्भेदनं युवमुखे साहजिकः शोभातिशयो जायते। कीदृशे दिनमुखे। उज्जृंभेति। उज्जृंभानि विकसितानि यान्यम्बुजानि तान्येव नेत्राणि तेषां द्युतिर्यस्मिंस्तत्र यौवनारंभे युवनेत्रयोरपि शोभातिशयेन विकसितांभोजसाम्यं भवति। अत्र स्तुतिप्रकरणे वचोभंग्या रसपोषणाय अप्रस्तुतशृंगाररस संचारोऽति चातुर्यम्। दशशतीति दशानां शतानां समाहार इति द्विगावकारांतस्य तस्य स्त्रीत्वाद्विगोरितिङीपि सिध्यति। 'तनूरुहं रोमलोम-तद्वृद्धौ श्मश्रुपुंमुखे" इत्यमरः॥ १५॥

अथ षोडषं पद्यम्

मौलीन्दोर्मैष मोषीद् द्युतिमिति वृषभाङ्केन यः शङ्किनेव
प्रत्यग्रोद्घाटिताम्भोरुहकुहरगुहासुस्थितेनेव धात्रा।
कृष्णेन ध्वान्तकृष्णस्वतनुपरिभवत्रस्नुनेव स्तुतोऽलं
त्राणाय स्तात्तनीयानपि तिमिररिपोरर्चिषामुद्गमो वः॥१६॥

तिमिररिपोः सूर्यस्य तनीयानतिसूक्ष्मोपि प्रातर्जातः, अर्चिषां कांतीनामुद्गम उदयो वस्त्राणाय रक्षणाय स्ताद्भवतु। तनीयानपित्यपीशब्देन तेजसां हीनवयः समीक्ष्यत इति वचनात्तनीयसोपि तस्य रक्षणसामर्थ्यं द्योत्यते। कीदृश उद्गमः, मौलीति वृषांकेन रुद्रेणालमत्यर्थं स्तुतः। किं भूतेन। एष भगवान्सूर्यो मम मौलीन्दोर्द्युतिं मामोषीत् मापहरतु। इति शंकिना शंकायुक्तेनेव। यथा गगनस्थितस्येदोर्द्युतिं मुषितवांस्तथा मन्मौलिस्थस्य मामौषोदिति भययुक्तेनेवेत्यर्थः। पुनर्यो धात्रा ब्रह्मणा स्तुतः। कीदृशेनेव। प्रत्यग्रेति। प्रत्यग्रमभिनवं तत्कालमुद्घाटितं यदंभोरुहं निजासनपद्मं तस्य कुहरमध्यं सैवगभीरत्वाद्गुहा तस्यां सुस्थितेनेव। रात्रौ पद्मस्य संकुचितत्वेन तत्र ब्रह्मणो दुस्थितस्य सूर्योदयकृतपद्मविकासेन सुस्थितत्वादुपकारितत्वेन स्तुतः। पुनः कीदृशः। कृष्णेनेति। कृष्णेन विष्णुना स्तुतः। कीदृशेन, ध्वांतवत्कृष्णा या निजतनुः तस्या यः परिभवस्ततस्त्रस्नुना भीतेन। ध्वान्ते सक्रोधो भगवान्सूर्यस्तत्साम्यादिना मामपि परिभवेदिति त्रस्तेनेत्यर्थः। कविना तु चातुर्येण विष्णुरुद्रादिभिः श्रीसूर्यनारायणस्य सर्वोपास्यत्वात्संध्यायां ब्रह्मविष्णुरुद्रैस्तुतिः क्रियत इति वास्तवोर्थः प्रकटीकृतः। विष्णुरुद्रयोर्भयहेतुका स्तुतिर्वर्णिता। ब्रह्मणस्तु हर्षहेतुका। त्रस्नुरित्यत्र भसिगृधीति क्नुप्रत्ययः॥ १६ ॥

अथ सप्तदशं पद्यम्

वीस्तीर्णं व्योम दीर्घाः सपदि दशदिशो व्यस्तवेलाम्भसोऽब्धीन्
कुर्वद्भिर्दृश्यमानानगनगरनगाभोगपृथ्वीं च पृथ्वीम्।
पद्मिन्युच्छ्वास्यते यैरुषसि जगदपि ध्वंसयित्वा तमिस्रा-
मुस्रा विस्रंसयन्तु द्रुतमभिमतं ते सहस्रत्विषो वः॥ १७ ॥

सहस्रत्विषः सहस्रकिरणस्य ते उस्राः। किरणा द्रुतं शीघ्रं वो युष्माकमनभिमतमनिष्टं विस्रंसयन्तु दूरीकुर्वन्तु। ते के। यैरुषसि प्रातः, तमिस्रां तामसीं रात्रिं ध्वंसयित्वा पद्मिनीजगदप्युच्छ्वास्यते। कारागृहादिव रजनीगाढान्धकारादुधृत्याश्वास्यत इत्यर्थः। पुनः कीदृशैर्यैः व्योम अन्धकारेण संकुचितं तन्निरासाद्विस्तीर्णं कुर्वद्भिः। पुनः सपदि दशदिशस्तथैव दीर्घाः कुर्वद्भिः। अब्धीन्व्यस्तवेलांभसः व्यस्तानि दूरीकृतानि वेलांभांसि येषां, इदृशान्कुर्वद्भिः। अब्ध्यम्भांसि अर्धरात्रे कल्लोलैस्तटेषु प्रसरन्ति। प्रातःसूर्यकिरणास्तानि संशोष्य समुद्रतटानि प्रकटी कुर्वन्ति। पुनः कीदृशैर्यैः। दृश्येति पृथ्वीं दृश्यान्धकारापगमाद् दृष्टुं शक्यो यो नगानां पर्वतानां नगराणां नगानां वृक्षाणां चाभोगः परिपूर्णता तेन पृथ्वीं विशालां कुर्वद्भिः। शैलवृक्षौ नगावगौ। आभोगः परिपूर्णता इत्यमरः ॥१७॥

अथाष्टादशं पद्यम्।

अस्तव्यस्तत्वशून्यो निजरुचिरनिशानश्वरः कर्तुमीशो
विश्वं वेश्मेव दीपः प्रतिहिततिमिरं यः प्रदेशस्थितोपि।
दिक्कालापेक्षयासौ त्रिभुवनमटतस्तिग्मभानोर्नवाख्यां।
यातःशातक्रतव्यां दिशि दिशतु शिवं सोऽर्चिषामुद्गमो वः ॥१८॥

तिग्मभानो रुष्णरश्मेः सः अर्चिषां दीप्तीनाम् उद्गम उदयो वः शिवं दिशतु। सः कः। यः विश्वं जगत्प्रतिहततिमिरं निरस्तांधकारं कर्तुमीशः। कः किमिव। दीपो वेश्मेव। कीदृशः। प्रदेशस्थितोपि प्रदेशे नियते आकाशदेशे स्थितोपि। अपिशब्देनेतरदीपाद्वैलक्षण्यं द्योत्यते। सदीपः कदाचिदंतः कदाचिद्वहिर्दीपाधारयष्टौ हस्ते वा प्रदेशभेदेन तिष्ठति। अयं तु सार्वदिको दक्षिणउत्तरो वा अकाशदेशस्तेनैव गच्छंस्त्रैलोक्यान्धकारं दूरीकरोति। पुनः कीदृशः। अस्तव्यस्तशून्यः। स तु वायुना अस्तो निर्वापितः, व्यस्त इतस्ततो मंदवातेन चालितोऽपि भवति। अयन्तु द्वीपान्तरं गच्छन्लोकदृष्ट्यगोचरत्वेनास्तंगत इव प्रतीयते न वस्तुतः। पुनः कीदृशः। निजरुचि नित्यदीप्तिभाक्—न तथादीपः। पुनः कीदृशः। अनिशेति। अनिशमहर्निशमनश्वरः, स तु तैलवर्त्यभावे निर्वाति। पुनः

कीदृशः । शातक्रतव्यामिन्द्रसम्बन्धिन्यां दिशि पूर्वस्यां नवाख्यां नवीनाभिधां यातः । चिरन्तनोऽपि पूर्वस्यां प्रथमं प्रादुर्भवन्, लोकैर्नवत्वेन विधीयमानः, न तु प्रत्यहं नवः क्रियते । कीदृशस्य तिग्मभानोः ॥ दिगिति ॥ दिशां पूर्वादीनां कालानां प्रातरादीनां चापेक्षया भेदसम्पादनेच्छया परोपकाराय स्वातन्त्र्येण त्रिभुवनमटतः । दिक्कालाद्यपरिच्छेदे अग्निहोत्राद्य सम्भवात् ॥ धर्ममार्गप्रवर्तनाय सदा पर्यटनमित्यर्थः । 'स्वके नित्ये निजन्त्रिषु' इत्यमरः ॥१८॥

अथ एकोनविंशं पद्यम्—

**मागान्म्लानिं मृणालीमृदुरितिदययैवाप्रविष्टोऽहिलोकं**
**लोकालोकस्य पार्श्वं प्रतपति न परं यस्तदाख्यार्थमेव ।**
**उर्द्धं ब्रह्माण्डखण्डस्फुटनभयपरित्यक्तदैर्ध्यो द्युसीम्नि**
**स्वेच्छावश्यावकाशावधिरवतु स वस्तापनो रोचिरोघः ॥१९॥**

स प्रसिद्धस्तापनस्तपनसंबन्धी रोचिरोघः कान्तिसमूहो वो युष्मानवतु । स कः मागादिति । मृणालीं विसं अल्पं मृणालं मृणाली तद्वन्मृदुः । सुकुमारोयं नागलोको म्लानिं मदीयातपजन्यां मागात् मागच्छतु इति दययैव योऽहिलोकमप्रविष्टः । पुनर्लोकालोकस्याचलस्य परं पार्श्वं तदाख्यार्थं तन्नामसंरक्षणार्थमेव न प्रतपति । विधात्रा लोकालोक इत्यन्वर्थं नाम तस्य पर्वतस्य कृतम् । श्रीसूर्यो यदि परपार्श्वमपि प्रतपेत्तदा विधातृकृता मर्यादा भिद्येतेति, तत्संरक्षणार्थमित्यर्थः । पुनः कीदृशः । ऊर्द्ध्वं ब्रह्माण्डस्य यः खण्ड उपरिभागः तस्य स्फुटनं विदलनं तद्भयतस्त्यक्तदैर्ध्यं इत्यर्थः। पुनः कीदृशः । द्युसीम्नीति। द्युसीम्नि आकाशदेशे स्वेच्छावश्योऽवकाशस्य प्रचारस्यावधिर्यस्य स तथा, स्वेच्छया सर्वत्र प्रचरितुं शक्तोऽपि दयावशात्परिच्छिन्न एव देशे प्रचरन्नित्यर्थः। 'ओघ वृंदोऽम्भसां यः' इत्यमरः, 'मृणालं बिसम्' इत्यपि ।

अथ विंशतितमं पद्यम्—

**अश्यामः काल एको न भवति भुवनान्तोऽपि वीतान्धकारः**
**सद्यः प्रालेयपादो न विलयमचलश्चंद्रमा अप्युपैति ।**

बन्धः सिद्धाञ्जलीनां न हि कुमुदवनस्यापि यत्रोज्जिहाने
तत्प्रातः प्रेक्षणीयं दिशतु दिनपतेर्द्धाम कामाधिकं वः ॥२०॥

तद्दिनपतेर्द्धाम तेजः वो युष्माकं कामाधिकमभिलाषादधिकं पदार्थं दिशतु। तत्किं, यत्र यस्मिन्नुज्जिहाने उदयमाने सति एकः केवलः कालः प्रातः समयः अश्यामो न भवति, किन्तु भुवनान्तोऽपि कालः अश्यामः न विद्यते। श्यामारात्रिर्यस्मिन्नेवं भूतः भुवनान्तस्तु अश्याम उज्वलः। पुनः कीदृशः, सः वीतान्धकारः। पुनः प्रालेयपादः। हिममयप्रत्यन्तपर्वतोऽचलो हिमालय एकः सद्यो विलयं नाभ्युपैति। किन्तु चन्द्रमा अपि। हिमालयो विलयमातपसंबंधा-द्द्रवीभावम्। चन्द्रमास्तु विलयमस्तम्। पुनः सिद्धाञ्जलीनां एको बन्धो न हि। कुमुदवनस्यापि। सिद्धाञ्जलीनां संध्यानमस्कारार्थं योगः। कुमुदवनस्य तु दलसम्बन्धः। तत्कीदृशं धाम प्रातरिति। प्रातःकाले कोमलत्वात्प्रेक्षणीयं द्रष्टुं शक्यम्। रमणीयश्च। उज्जिहान इति। ओहाङ्गताविस्यस्माच्छानचि रू-पम् ‘ श्यामा षोडषवर्षा स्त्री श्यामा रात्रिश्च कथ्यते ’ इत्यनेकार्थकोषः ॥२०॥

अथैकविंशं पद्यम्--

यत्कान्तिं पङ्कजानां न हरति कुरुते प्रत्युताधिक्यरम्यां
नो[1] धत्ते तारकाभां तिरयति नितरामाशु यन्नित्यमेव।
कर्तुं नालं निमेषं दिवसमपि परं यत्तदेकं त्रिलोक्या-
श्चक्षुः सामान्यचक्षुर्विसदृशमघभिद्भास्वतः स्तान्महो वः॥२१॥

भास्वतस्तन्महस्तेजो वो युष्माकमघभित् अघस्य पापस्य दुःखस्य व्यस-नस्य च भेदकं स्ताद्भवतु। कथं भूतम्। त्रिलोक्या एकमद्वितीयं चक्षुः सर्वार्थ-प्रकाशकम्। कीदृशं चक्षुः सामान्यमितरच्चक्षुस्ततो विसदृशमन्यादृशम्। वैसादृश्यमेवाह--यदिति। यत्पङ्कजानां कांतिं न हरति प्रत्युत वैपरीत्येनाधिक्येन रम्यां कुरुते, इतरच्चक्षुस्तु पङ्कजानां कांतिं निजशोभयया हरति। पुनः तारकाभां नक्षत्रदीप्तिं नोधत्ते न पुष्णाति, किन्तु आशु नित्यमेव तिरयति तिरोधत्ते। तत्तु तारकाभां कनीनिकाशोभां धत्ते पुष्णाति धारयति वा। पुनः परं केवल-

१ नाधत्ते इत्यपि पाठः

निमेषमल्पकालं कर्तुं नालं न समर्थं, किन्तु दिवसमपि कर्तुमलम्। तत्तु निमेषं निमीलनमेवकर्तुमलं नान्यत्किञ्चित्। पुनः कीदृशमेकमद्वितीयम्। तत्तु चतुर्मुखपञ्चमुखषण्मुखादीनां तत्तन्मुखानुसारेण, इतरेषां द्विसंख्यम्। तारकाक्ष्णः 'कनीनिका' इत्यमरः। 'अंहो दुःखव्यसनेष्वघम्' इति च ॥२१॥

अथ द्वाविंशं पद्यम्––

क्ष्मां क्षेपीयः क्षपाम्भःशिशिरतरतलस्पर्शतर्षादृतेव
द्रागाशा नेतुमाशाद्विरदकरसरःपुष्कराणीव बोधम्।
प्रातः प्रोल्लङ्घ्य विष्णोः पदमपि घृणये वाति वेगाद्दवीय-
स्युद्दामद्योतमाना दहतु दिनपतेर्दुर्निमित्तं द्युतिर्वः ॥ २२ ॥

दिनपतेर्द्युतिः प्रातर्वो दुर्निमित्तं दुःस्वप्नाद्यपशकुनं दहतु भस्मीकरोतु। तेजसो भस्मीकरणमौचिती। कीदृशी द्युतिः। उद्दामेति। उद्दामा निरर्गला चासौ द्योतमाना च, त्रैलोक्यव्यापिनी। अत्र बहुधोत्प्रेक्षते। क्ष्मामिति। क्षपाम्भोरात्रिपतितं हिमजलं तेन शिशिरतरं यत्तलं भूतलं तस्य स्पर्शे यस्तर्षोऽभिलाषस्तस्मात् क्षेपीयः क्षिप्रतरं यथास्यादेवं क्ष्मां पृथ्वीं ऋता प्राप्तेव। ऋङ्गतावित्यस्य रूपम्। श्र्युकःकितीत्येनेनेट्प्रतिषेधः। अत्यूष्मवत्त्वेन शैत्यार्थमिवेत्यर्थः। पुनः आशा दिशः तासां द्विरदाः दिग्गजास्तेषां करास्त एव सरांसि तेषाम् पुष्कराणि बोधं विकासं नेतुमिव द्राक् शीघ्रमाशादिशः, ऋतेत्यत्रापि संबध्यते, पुष्करसद्भावात्। अत्र पुष्कराणि करिकराग्राणि। 'पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले। व्योम्नि खड्गफले पद्मे तथौषधिविशेषयोः' इति कोषात्। पुनः कीदृशी विष्णोः पदं घृणया जुगुप्सयेवातिवेगात् प्रोल्लंघ्य दवीयसी अतिदूरे स्थिताः। विष्णोः पूज्यस्य पदं पादैरनाक्रमणीयमित्यधर्मजुगुप्सयेत्यर्थः। अत्र विष्णोः पदं व्योम। 'वियद्विष्णुपदम्' इत्यभिधानात् 'जुगुप्साकरणे घृणः' इत्यमरः। क्षेपीय इति अतिशयेन क्षिप्तमित्यर्थे ईयसि स्थूलदूरेतियणादिपरलोपे पूर्वस्य गुणे च सिद्धम्। दवीयसीत्यपि अतिशयेन दूरेत्यर्थे तथैव सिध्यति। अत्र तर्षादितेवेति पाठः साधीयान्[1] ऋतशब्दस्य सत्यार्थे रूढत्वेन भ्रामकत्वात्। इता प्राप्तेति सुगमोर्थः इति ॥ २२ ॥

---

१ इदं चिन्त्यम् ऋतऋतशब्दयोः स्वरव्यञ्जनपूर्वकारम्भेण भ्रमाऽभावात्।

अथ त्रयोविंशं पद्यम्—

नो कल्पापायवायारदयरयदलत्क्ष्माधरस्यापि गम्या
गाढोद्गीर्णोज्ज्वलश्रीरहनि न रहिता नोत्तमः कज्जलेन ।
प्राप्तोत्पत्तिः पतङ्गान्नपुनरुपगता मोषमुष्णत्विषो वो ।
वर्तिः सैवान्यरूपा सुखयतु निखिलद्वीपदीपस्य दीप्तिः ॥२३॥

निखिलद्वीपानां दीपस्य दीपवत्प्रकाशकस्योष्णत्विषो दीप्तिर्वो युष्मान्सुखयतु, अज्ञानान्धकारनिरासेन । कीदृशी । अन्यरूपा । इतरदीपदीप्तिविलक्षणा । विशेषणैर्वैलक्ष्यण्यमेवाह—नो इति । अदयो निर्दयः प्रचण्डो यो रयो वेगस्तेन दलन्तो विशीर्यमाणाः क्ष्माधराः पर्वता यस्मादीदृशस्यापि कल्पापायः कल्पांतस्तद्वायोर्नो गम्या नो क्रान्तुं शक्या । दीपदीप्तिस्तु स्वल्पेनापि वातेन निर्वाति । पुनरहनि दिने गाढं नितान्तमुद्गीर्णा प्रकटीकृता उज्ज्वला श्रीः शोभा यया । सा तु दिने मंदश्रीः । पुनः उत्तमः उत्कृष्टं यत्तमः तद्रूपेण कज्जलेन प्रकृष्टान्धकाररूपकज्जलेन नो रहिता इति न किन्तु रहितैव । सा तु कज्जलसहिता । पुनः पतङ्गात्सूर्यात्प्राप्ता उत्पत्तिर्यया तादृशी । पुनर्मोषं तिरोधानं न गता । सा तु पतङ्गात्सूक्ष्मपक्षिविशेषान्मोषं प्राप्नोति तेन निर्वाप्यते । पुनः कीदृशी । अवर्तिः वर्तिरहिता सा तु वर्त्याश्रितव तिष्ठतीति । 'पतङ्गो पक्षिसूर्यौ च' इत्यमरः ॥ २३ ॥

अथ चतुर्विंशं पद्यम्—

निःशेषाशावपूरप्रवणगुरुगुणश्लाघनीयस्वरूपा
पर्याप्ता नोदयादौ दिनगमसमयोपप्लवेऽप्युन्नतैव ।
अत्यन्तं यानाभिज्ञा क्षणमपि तमसा साकमेकत्र वस्तुं
ब्रध्नस्येद्धा रुचिर्वो रुचिरिव रुचितस्यात्पये[1] वस्तुतेऽस्तु ॥२४॥

ब्रध्नस्येद्धा दीप्ता रुचिः कान्तिर्वो रुचितस्य ईष्टस्य वस्तुनः आप्तये लाभायास्तु । केवरुचिरिच्छेव महाशयस्य प्रभोः सूर्यस्य निजेच्छातुल्या । महा-

१ रुचिरस्येत्यपि पाठः ।

शयस्य हि प्रभोरिच्छा अर्थिने यथाभिलषितं वस्तु प्रयच्छति तद्वत्। कीदृशी कान्तिः। निःशेषेति। निःशेषाणां समस्तानां आशानां दिशामवपूरः अवपूरणं तत्र प्रवणास्तत्परा ये गुरवः श्रेष्ठा गुणा भास्वरत्वादयस्तैः श्लाधनीयं स्वरूपं यस्याः सा, तादृशी महाशयस्येच्छाऽपि निःशेषाणां लोकानां या आशा वस्तु-तृष्णा तस्या अवपूरणे प्रवणा। ये गुरवः श्रेष्ठा गुणाः गुणज्ञत्वदातृत्वकारुण्या-दयस्तैः श्लाघनीयस्वरूपा। पुनः कीदृशी कान्तिः। पर्याप्ता परिपूर्णा सर्वतः प्रसृत्य, सापि पर्याप्ता विशाला, न तु याचकजनबाहुल्यमालोक्य सङ्कुचिता। पुनः कीदृशी कान्तिः। उदयादाविति। उदयस्यादौ पूर्वस्मिन् केवलं नोन्नता। किन्तु दिनगमसमयोपप्लवे दिनसमाप्तिसमयरूपापद्रवेऽप्युन्नतैव। महाशयस्येच्छाऽपि उदयादौ भाग्योदयस्यारम्भे केवलं नोन्नता, किन्तु दैववशाद्वैभवदिनानां गमन-समयरूपोपद्रवेऽप्युन्नतैव। तदुक्तम् 'सम्पत्तौ च विपत्तौ च महतामेकरूपता' इति। शकेन्द्रमहाराजशालिवाहनसंगृहीतप्राकृतगाथासंगृहीतगाथासप्तशत्यामपि तथा॥ तुंगो धि अहो इमणो मणं सिणो अत्तिमासु दसासु। अत्थमणम्मि विरयिणो किरणा उद्धंचि अफुरन्ति। एतस्य प्रतिसंस्कृतपाठः। तुंगमेव मनो मनस्विनामन्तिमास्वपि दशासु। अस्तमानेऽपि रवेः किरणा उर्ध्वमेव स्फुरन्ति। गाथाप्रतिसंस्कृते यथास्थितपदानामेव कथनीयत्वाच्छन्दोभङ्गदोषो न गणनीयः। पुनः कीदृशी कान्तिः। अत्यन्तमिति। या क्षणमपितमसान्धकारेण साकमेकत्र वस्तुमनभिज्ञा साहजिकविरोधात्। महाशयस्येच्छाऽपि क्षणमपि तमसा तमो-गुणेन साकमेकत्र वस्तुमनभिज्ञा। सर्वदा सात्विकत्वादिति। 'आशातृष्णापि चायते 'त्यमरः। 'राहौ ध्वांते गुणे तमः' इति। अभिष्यङ्गे स्पृहा याञ्चा गभ-स्तौ च रुचिः स्त्रियामिति च ॥२४॥

अथ पञ्चविंशं पद्यम्—

बिभ्राणः शक्तिमाशु प्रशमितबलवत्तारकौर्जित्यगुर्वीं
कुर्वाणो लीलयाधः शिखिनमपि लसच्चन्द्रकान्तावभासम्।
आदध्यादन्धकारेरतिमतिशयिनीमावहन् वीक्षणानां
बालो लक्ष्मीमपारामपर इव गुहोऽहर्पतेरातपो वः ॥२५॥

अहर्पतेर्बालो नवीन आतपो वो युष्माकमपारां लक्ष्मीम्—आदध्यात्

कुर्यात्। कर्तुमर्हः शक्तो वा अर्हार्थे शक्त्यर्थे वा लिङ्[1]। आशिषि तु आधेयादिति-स्यात्। पूर्वोक्तमर्थत्रयं यथाकथंचिदाशिष्येव पर्यवस्यति। आधेयादिति वा पाठः। क इव अपरो गुहः स्कंद इव। सोपि बालः सर्वदा कुमारत्वेन प्रसिद्धः। विशेषणै-रुभयोः सादृश्यमाह बिभ्राण इति। आशु शीघ्रं प्रशमितं यद्बलवदधिकं तारका-णां नक्षत्राणामौर्जित्यं तेजस्वित्वं तेन। गुर्वीं गरिष्ठां शक्तिं सामर्थ्यं बिभ्राणः। कीदृशः स्कन्दः। प्रशमितं यद् बलवतस्तारकस्यासुरस्यौर्जित्यमौद्धत्यं तेन गुर्वीमति-दृढां शक्तिं शस्त्रविशेषं बिभ्राणः। शक्त्या तारकं हतवानितिपुराणेषु तत्प्रसिद्धेः। पुनः कीदृश आतपः। कुर्वाण इति। लीलया अप्रयासेन शिखिनम् अग्निं तथा लसतां दीप्यमानानां चन्द्रकान्तानामवभासं प्रकाशमधःकुर्वाणः प्रतिहतं कुर्वन्। स्कंदोपि। लीलया शिखिनं मयूरमधो वाहनत्वेन कुर्वन्। अपिशब्देन पक्षिणो वाहनत्वायोग्यत्वेपि बाललीलया तं वाहनं करोतीति द्योत्यते। कीदृशं शिखिनम्। लसदिति। लसन्तो ये चन्द्रकाणां मेचकानामन्तास्तैरवभासः शोभा यस्येति सः। तथा कुमारस्य वाहनीकरणे हेतुभूतमिदं विशेषणम्। बाला हि विचित्रवस्तु दृष्ट्वा क्रीडनार्थं तत्रोत्सुका भवन्ति। पुनः कीदृशः आतपः अन्धकारे वीक्षणानां सक-लप्राणिनेत्राणामतिशयिनीं रतिं प्रीतिं प्रकाशदानेन कुर्वन्। स्कन्दः कीदृशः। अन्धकारेरन्धकदैत्यशत्रोः शिवस्य लोचनानां त्रयाणां रतिम् आवहन् अन्धकारेः रतिमित्यत्ररोरीति रतिलोपः। "कासूसामर्थ्ययोः शक्तिः"इत्यमरः " शिखिनौ वह्निबर्हिणौ" इत्यपि। समौ चन्द्रकमेचकौ " इति च ॥२५॥

अथ षड्विंशं पद्यम्—

ज्योत्स्नांसाकृष्टिपाण्डुद्युति तिमिरमषीशेषकल्माषमीष-
ज्जृम्भतौद्भूतेन पिङ्गं सरसिजरजसा सन्ध्यया शोणशोचिः।
प्रातः प्रारम्भकाले सकलमपि जगच्चित्रमुन्मीलयन्ती
कान्तिस्तीक्ष्णत्विषोक्ष्णां मुदमुपनयताचूलिकेवातुलां वः॥२६॥

तीक्ष्णत्विष उष्णरश्मेः कान्तिर्वोऽक्ष्णामतुलां मुदमुपनयतात्प्रापयतु। केव। तूलिकाचित्रलेखनशलाकेव प्रातः प्रारम्भकाले प्रातरादौ निखिलमपि जगच्चित्रं विचित्रम्। तदेव चित्रमालेख्यमितिवा। उन्मीलयन्तीध्वान्तापसारणेन नवीनमिव प्रकटीकुर्वन्ती। आलेख्यतूलिकापि नेत्राणां चित्रदर्शनजां प्रीतिं जनयति।

१ प्रार्थनायां लिङि न दोषः

ज्योत्स्नेति। ज्योत्स्नांशस्य आकृष्टिराकर्षणं तेन पाण्डुद्युतिर्यस्य तत्तथा। समस्तज्योत्स्नायाः सूर्यप्रभया तिरोहित्वाज्ज्योत्स्नाशेषस्वीकारेण पाण्डुद्युतीत्यर्थः। पुनः कीदृशम्। तिमिरेति। तिमिरमेव मषी तस्याः शेषेण कल्माषं कर्बुरम्। पुनः कीदृशम्। ईषदिति। ईषत्किञ्चिद्या जृम्भाविकारस्तेनोद्भूतेन सरसिजानां रजसा परागेण पिङ्गं पिङ्गलम्। पुनः कीदृशम्। सन्ध्यया शोणं शोचिर्दीप्तिर्यस्य तत्तथा। आलेख्यमपि चित्रफलकादौ तूलिकया बहुभिर्वर्णैरुन्मील्यते। "तुलश्चित्रोपकरणे शलाकातूलशय्ययोः" इत्यमरः। अल्पस्तूलस्तूलिका अल्पार्थे स्त्रीत्वम्। "आलेख्याश्चर्ययोश्चित्रम्" इत्यमरः॥ २६॥

अथ सप्तत्रिंशं पद्यम्—

**आयान्ती किं सुमेरोः सरणिररुणिता पाद्मरागैः परागै-**
**राहोस्वित्स्वस्य माहारजनविरचिता वैजयन्ती रथस्य।**
**माञ्जिष्ठी प्रष्ठवाहावलिविधुतशिरश्चामराली नु लोकै-**
**रालोक्याशङ्कितैवं सवितुरघनुदे स्तात्प्रभातप्रभा वः॥२७॥**

सवितुः प्रभातप्रभा वो युष्माकमघनुदे स्तात्। कीदृशी। लोकैरालोक्यैवमाशङ्किता तर्किता। बहुधालोकतर्कमाह। आयान्तीति। सुमेरोः सकाशादायान्ती सरणिर्मार्गरेखा किम्? कीदृशी सरणिः पाद्मरागैः पद्मरागसंबन्धिभिः परागरेणुभिः अरुणिता सुमेरुसरणेः पद्मरागमणिव्याप्तत्वान्मार्गचारिणां चरणाक्रमणचूर्णिताम्। पद्मरागसूक्ष्मकणैरारक्तेत्यर्थः। आहोस्विदथवा स्वस्य स्वकीयस्य रथस्य माहारजनं कुसुम्भरक्तं वस्त्रं तेन विरचिता वैजयन्ती पताकेयम् नु? अथवा माञ्जिष्ठी मञ्जिष्ठा औषधिविशेषस्तयारक्ता। प्रष्ठा अग्रेसरा ये वाहास्तेषामावल्या विधुतानि यानि शिरांसि तेषाम् चामराली चामरपङ्क्तिरियं नु? गमने आश्वानां शिरोविधुवनं जातिस्वभाव इति। माहारजनमाञ्जिष्ठीशब्दौ हरिद्रामहारजनाभ्यामञ् इत्यञा, तेन रक्तं रागादित्यणा च सिद्धौ। माहारजनशब्देन विशेषणेन वैजयन्तीपदसान्निध्यसामर्थ्याद्विशेष्यं वस्त्रमुच्यते "स्यान्महारजने क्लीबं कुसुम्भं करके पुमान्। मञ्जिष्ठा विकसा जिङ्गी समङ्गा कालमेषिका। पुरोगाग्रेसरप्रष्ठाग्रतःसरपुरस्सराः। आहो उताहो किमुत विकल्पे स्वित्प्रश्ने च" इति कोशः॥२७॥

अथाष्टाविंशं पद्यम्—

ध्वान्तध्वंसं विधत्ते न तपति नितराम्नातरूपं व्यनक्ति
न्यक्त्वं नीत्वापि नक्तं न वितरतितरां तावदह्नस्त्विषं यः ।
स प्रातर्माविरंसीदसकलपटिमा पूरयन्युष्मदाशा-
[१]माकाशाशावकाशावतरणतरुणप्रक्रमोऽर्कप्रकाशः ॥ २८ ॥

सोऽर्कप्रकाशो युष्मदाशां युष्माकमभिलाषं पूरयन्माविरंसीत् । विरतो मा भवतु। सर्वदा पूरयत्वित्यर्थः। स कः? यो ध्वान्तस्य ध्वंसं विधत्ते। न तु नितरां तपति । अतिरूपमतिशयितं रूपं स्वरूपं न व्यनक्ति न प्रकटयति । पुनर्नक्तं रात्रिं न्यक्त्वं ह्रस्वत्वम् । नीत्वापि यस्तावदह्नो दिनस्य त्विषं कान्तिं न विसरतितरामतिशयने न वितरति । कीदृशः । असकलेति । पूर्वोक्तप्रकारेण प्रातःकाले असकलोऽसमग्रः पटिमा यस्य असमर्थ इव प्रतीयमानो वस्तुतो महाप्रभाव इत्यर्थः । तदेवाह । आकाशेति । आकाशस्याशानां दिशां च योऽवकाशः स्थलम् । तत्रावतरणं सर्वत्र व्याप्तिस्तत्र तरुणो दृढः प्रक्रम उपक्रम उद्यमो यस्य स तथा । प्रातः सूक्ष्मोऽप्यतितेजस्त्वान्महापराक्रम इत्यर्थः । "न्यङ्नी च खर्वह्रस्वास्युः" इत्यमरः । नीचो भावो न्यक्त्वम् ॥ २८ ॥

अथैकोनत्रिंशं पद्यम्—

तीव्रं निर्वाणहेतुर्यदपि च विपुलं यत्प्रकर्षेण चाणु
प्रत्यक्षं यत्परोक्षं यदिह यदपरं नश्वरं शाश्वतञ्च ।
यत्सर्वस्य प्रसिद्धं जगति कतिपये योगिनो यद्विदन्ति
ज्योतिस्तद्विप्रकारं सवितुरवतु वो बाह्यमाभ्यन्तरञ्च ॥२९॥

सवितुर्द्विप्रकारं तज्ज्योतिर्वो युष्मानवतु । द्विप्रकारत्वमेवाह । बाह्यमिति । बाह्यं बहिर्मण्डलात्प्रसृतम् । आभ्यन्तरं हृदयाकाशे स्थितं ब्रह्म ज्योतिरुपनिषन्निरूपितम् । द्वयोः परस्परवैलक्ष्येण प्रत्येकं विशेषणानि । तीव्रमिति । बाह्यं

---

१ अत्र आशाकाशावकाशा इति पाठोऽपि दृश्यते। आशानाम् आकाशस्य च द्वन्द्वे अल्पाच्तरत्वेन आशायाः पूर्वनिपात उचितः। टीकाकारस्तु अवतरणक्रमेण पूर्वमाकाशेऽनन्तरं दिक्षु इत्यानुपूर्व्या तथा युयोज ।

कीदृशम्। तीव्रं तीक्ष्णम्। आन्तरं कीदृशम्। निर्वाणस्य मोक्षस्य हेतुरतिसौम्यम्। पुनर्यत् विपुलं विस्तृतम्। द्वितीयं कीदृशम्। प्रकीर्षेणाणु। अतीन्द्रियत्वादणुत्वेनोक्तम्। पुनर्यत्प्रत्यक्षं द्वितीयं परोक्षमदृश्यम्। पुनर्यदिह लोके वर्त्तमानं द्वितीयमपरकाष्ठावरणयुक्तब्रह्मांडात्। वहिर्ब्रह्मत्वेन स्थितं पुनर्यन्नश्वरमस्तंगच्छत्। द्वितीयं तु शाश्वतं ध्रुवं पुनर्यज्जगति सर्वस्य लोकस्य प्रसिद्धं ज्ञातं द्वितीयं तु कतिपये स्वल्पा ये योगिनो यद्विदंति। सर्वस्येति षष्ठी शेषे। कतिपये इति प्रथमचरमेत्यादिना विकल्पेन सर्वनामत्वाज्जसःशीभावरूपं बोध्यम्। वहिर्भवमित्यर्थे वहिषष्टिलोपो यञ्चेति सिद्धम्॥ २९॥

अथ त्रिंशत्तमं पद्यम्—

**रत्नानां मण्डनाय प्रभवति नियतोद्देशलब्धावकाशं**
**वह्नेर्दार्वादिदग्धुं निजजडिमभरात्कर्त्तुमानन्दमिन्दोः।**
**यत्तु त्रैलक्यभूषावधिरघदहनं ह्लादि वृष्ट्याशुतद्वो**
**बाहुल्योत्पाद्यकार्याधिकतरमवतादेकमेवार्कमोजः ॥३०॥**

तदार्कमोजः सूर्यसम्बन्धि तेजो वो युष्मानाश्ववतात्। किं तत्। यदेकमेव वाहुल्येन बहुत्वेनोत्पाद्यमानानि यानि कार्याणि तैरधिकतरमन्येषां तेजसो विशिष्टतमम्। तदेवाह। रत्नानामिति। रत्नानामोजो मण्डनाय प्रभवति, कीदृशं तत्। नियतेति। नियतो ध्रुवो य उद्देशोऽवस्थानदेशः शिरःकण्ठवक्षोवाहुकरादिस्तत्र लब्धोऽवकाशः स्थितिर्येन। तत्तत्स्थलेषु स्थित्वा तत्तदेव परिच्छिन्नं मण्डयति। पुनर्वह्नेरोजस्तृणदार्वादिमूर्त्तं वस्तु दग्धुं प्रभवति। पुनरिन्दोरोजः निजो यो जडिमा शैत्यं तस्य भरादाधिक्यादग्न्यातपतप्तानामेवानन्दं कर्तुं प्रभवति। यत्तु त्रैलोक्यस्य या भूषा तस्यावधिः पराकाष्ठा। इतोऽधिकं त्रिलोकीमण्डनमन्यन्नास्ति। पुनरघदहनमग्निना दग्धुमशक्यस्य पापस्यापि दहनम्। पुनर्वृष्ट्या ह्लादि। निजकिरणोत्पन्नघनजनितवृष्ट्या सर्वाह्लादनशीलम्। अत एकमेवेतरवैशिष्ट्येनान्याशक्यबहुकार्यकर्तृत्वादतिश्रेष्ठमित्यर्थः। [1]अत्र बहुषु पुस्तकेषु एकमेवार्कतेज इति पाठो दृष्टस्तत्र तेजःशब्दस्य समासान्तर्गतत्वेन रत्नादिभिरन्वयासामर्थ्यादस्मन्मते त्वेकमेवार्कमोज इत्याकारः पाठः समर्थयितुं शक्यते। तथापि

१ चिन्त्यमिदम् उत्तरपदार्थस्य प्राधान्यात्तत्राऽन्वये न दोषः। अतएव पुरुषान्वयतात्पर्येण शोचनो राजपुरुष इति भवत्येव.

श्रीसूर्यानुगृहीतस्य मयूरभट्टस्य मुखात् क्लिष्टः पाठो न निःसरतीति। एकमेवार्कमोज इति पाठोऽस्माभिर्निरधारि। कुत्रचित्पुस्तके, अनेनैवापरितोषेण एकमर्कस्य तेज इति पाठो लिखितः। स त्वेवशब्दस्यावश्यकत्वात्पूर्वप्रसिद्ध पाठापेक्षयातिवैलक्षण्याद्ग्रन्थशैथिल्याच्चोपेक्ष्यः। "अथातिशयोभरः" इत्यमरः ॥ ३० ॥

अथैकत्रिंशं पद्यम्—

**मीलच्चक्षुर्विजिह्मश्रुति जडरसनं विघ्नितघ्राणवृत्ति**
**स्वव्यापाराक्षमत्वक्परिमुषितमनः श्वासमात्रावशेषम् ।**
**विस्रस्ताङ्गं पतित्वा स्वपदमहरतादश्रियं वोऽर्कजन्मा**
**कालव्यालावलीढं जगदगद इवोत्थापयन्प्राक्प्रतापः ॥३१॥**

अर्कजन्मा सूर्यादुत्पन्नः प्रतापो वो युष्माकमश्रियमलक्ष्मीमपहरतात्। किं कुर्वन्। प्राक् पूर्वं कालव्यालावलीढम्। रात्रिकालस्वरूपव्यालेन कृष्णसर्पेण च अवलीढं दष्टं जगदुत्थापयन्। अन्धकारविषमपनीय जागरयन्। प्रथममानुषङ्गिकं फलं तदुदयस्येदम्। अग्रिमं त्वनिर्वचनीयं फलं किं वक्तव्यमित्यर्थः। क इव अगदो-महौषधमिव। कीदृशं जगत्। मीलदिति। मीलन्ती चक्षुषी यस्य तत्तथा। पुनः विजिह्मे विशेषेण जिह्मे अलसे शब्दावधारणाक्षमे श्रुती कर्णौ यस्य तादृशम्। पुनर्जडा रसग्रहणाशक्ता रसना यस्य तत्तथा। पुनर्विघ्निता दूरीभूता घ्राणस्य वृत्तिर्गन्धग्रहणशक्तिर्यस्य तथाभूतम्। पुनः स्वव्यापारे स्पर्शज्ञाने अक्षमा त्वक् यस्य तादृक्। पुनः परिमुषितं निद्रया मूर्छया च लीनं मनो यस्य तत्तथा। पुनः श्वासमात्रमवशेषो यस्य। न त्विन्द्रियव्यापारः कश्चिदित्यर्थः। पुनर्विस्रस्तानि शिथिलान्यङ्गानि यत्रैवं यथाभवति तथा पतित्वा स्वपत्। कृष्णसर्पेण दष्टोपीदृशो भवति। महौषधं त्वेतादृशमप्युत्थापयति। सूर्यप्रतापस्तु प्रथममेव तत्तुल्यः। पश्चात् ततोधिक इत्यर्थः। "जिह्मस्तु कुटिलेऽलसे" "भेषजौषधभैषज्यान्यगदोजायुरित्यपि" इति चामरः ॥ ३१ ॥

अथ द्वात्रिंशं पद्यम्—

**निःशेषं नैशमम्भः प्रसभमपनुदन्नश्रुलेशानुकारि**
**स्तोकस्तोकापनीतारुणरुचिरचिरादस्तदोषानुषङ्गः ।**

दाता दृष्टिं प्रसन्नां त्रिभुवननयनस्याशु युष्मद्विरुद्धं
वध्याद् ब्रध्नस्य सिद्धाञ्जनविधिरपरः प्राक्तनोर्चिःप्रचारः॥३२॥

ब्रध्नस्य प्राक्तनः प्राग्भवः अर्चिःप्रचारो युष्मद्विरुद्धं युष्माकमहितं वध्यात् हन्तु। कथम्भूतः। अपरः अन्यादृशः। सिद्धाञ्जनविधिरिति लुप्तोत्प्रेक्षा। किं कुर्वन्। निःशेषमिति। नैशं निशासम्बन्धि अम्भः रात्रिपतितहिमकणभूत-जलं प्रसभमपनुदन्नपनयन्। कीदृशमम्भः। अश्रुलेशानुकारि॰। अश्रुकणाकृति। पुनः कीदृशोर्चिःप्रचारः। स्तोकेति। स्तोकस्तोकं किञ्चित्किञ्चिदपनीता अरुणस्य स्वसारथेरुचिर्येन स्वदीप्त्या अरुणकान्तेराच्छादक इत्यर्थः। पुनः कीदृशः। त्रिभुवननयनस्य त्रैलोक्यनेत्रस्य प्रसन्नां निर्मलां दृष्टिं दर्शनव्यापारं तिमिर-निरासेन दाता दानशीलः। पुनः कीदृशः। अचिराच्छीघ्रमस्तो दोषानुषङ्गः दोषा रात्रिः तस्या अनुषङ्गः सम्बन्धो येन। नयनस्येति जातावेकवचनम्। सिद्धाञ्जनविधिरपि नेत्राद्विकारजं जलस्रावं प्रथममपनयति, किञ्चिदरुण-त्वञ्च दूरीकरोति, दोषाणां वातपित्तादीनामनुषङ्गं निरस्यति, पश्चात् तिमिररोगं दूरीकृत्य स्वच्छां दृष्टिं प्रयच्छतीति। दातेति ताच्छील्यादिषु तृन्, तद्योगे दृष्टि-मित्यत्र न लोकेति कर्मषष्ठीनिषेधः। "दोषोवान्ताधिके" "दोषा रात्री" इत्यमरः। वध्यादिति "हनोवध" इति वधादेशे हन्तेराशीर्लिङि रूपम्॥ ३२॥

अथ त्रयस्त्रिंशं पद्यम् —

भूत्वा जम्भस्य भेत्तुः ककुभि परिभवारम्भभूः शुभ्रभानो-
र्बिभ्राणा बभ्रुभावं प्रसभमभिनवाम्भोजजृम्भाप्रगल्भा।
भूषा भूयिष्ठशोभा त्रिभुवनभवनस्यास्य वैभाकरी या
विभ्रान्ति भ्राजमाना विभवतु विभवोद्भूतये सा विभा वः॥३३

सा वैभाकरी सूर्यसम्बन्धिनी विभा कान्तिर्वो युष्माकं विभवोद्भूतय ऐ-श्वर्योत्पत्तये विभवतु। कीदृशी सा। या त्रिभुवनभवनस्य त्रिभुवनमेव भवनं गृहं तस्य भूषा आभरणम्। कीदृशी भूषा। भूयिष्ठशोभा बहुलकान्तिः। जम्भ-स्य भेत्तुरिन्द्रस्य ककुभि भूत्वा स्थित्वा शुभ्रभानोः श्वेतकिरणस्य चन्द्रस्य परि-भवारम्भभूस्तिरस्कारस्थानम्। पुनर्बभ्रुभावं पिङ्गलत्वं बिभ्राणा। पुनः कीदृशी।

अभिनवेति । प्रसभं हठादभिनवानामम्भोजानां या जृम्भा विकासस्तत्र प्रगल्भा प्रौढा। पुनः कीदृशी । विभ्रान्तिर्विभ्रमो विलासस्तेन भ्राजमाना विराजमाना। "विपुले नकुले विष्णौ बभ्रुर्नातिपिङ्गले त्रिषु" इत्यमरः। अत्र भकारानुप्रासः ॥३३॥

अथ चतुस्त्रिंशं पद्यम्—

संसक्तं सिक्तमूलादभिनवभुवनोद्यानकौतूहलिन्या
यामिन्या कन्ययेवामृतकरकलशावर्जितेनामृतेन ।
अर्कालोकः क्रियाद्वो मुदमुदयशिरश्चक्रवालालवाला-
दुद्युन्बालप्रवालप्रतिमरुचिरहःपादपप्राक्प्रवालः ॥ ३४ ॥

अर्कालोकः सूर्यप्रकाशो वो मुदं क्रियात् । कीदृशः सः। अहःपादपस्य दिवसरूपवृक्षस्य प्राक्प्रवालः प्रथमाङ्कुरः। कीदृशः सः। उदयेति। उदयस्य पूर्वपर्वतस्य यच्छिरश्चक्रवालं शिरोमण्डलं तदेवालवालं तस्मादुद्यन्प्रादुर्भवन् । कीदृशात्तस्मात् संसक्तमिति। यामिन्यारात्रिरूपया कन्ययेव। अमृतकरश्चन्द्रः स एव कलशस्तेनावर्जितेन त्यक्तेनामृतेन संसक्तं निरन्तरम् यामचतुष्टयपर्यन्तं सिक्तं मूलं यस्य तस्मात् । कीदृश्या यामिन्या। कन्यया । अभिनवेति । अभिनवं नूतनं यद्भुवनं जगदेवोद्यानं तत्र कौतुहलिन्या कौतुकयुक्तया। कीदृशोऽर्कलोकः। बालेति। बालं नवीनं यत्प्रवालं विद्रुमस्तत्प्रतिमा तत्तुल्यारुचिर्दीप्तिर्यस्य सः। कन्याया अयं च स्वभावो यत्कौतुकात् क्रीडार्थमालवालं विरच्य तत्र वृक्षबीजमुप्त्वा कलशजलेन सिञ्चति। ततश्च बीजस्वाभाव्यादङ्कुरोत्पत्तिर्भवतीति। जात्युक्तिरियम्। "आलोको दर्शनोद्योतौ" "उदयः पूर्वपर्वतः" "चक्रवालं तु मण्डलम्" "अथविद्रुमः पुंसि प्रवालं पुन्नपुंसकम्" "प्रवालमङ्कुरेऽप्यस्त्री" इत्याद्यमरः ॥ ३४ ॥

अथ पञ्चत्रिंशं पद्यम्—

भिन्नं भासारुणस्य क्वचिदभिनवया विद्रुमाणां त्विषेव
त्वङ्गन्नक्षत्ररत्नद्युतिनिकरकरालान्तरालं क्वचिच्च ।
अन्तर्न्निःशेषकृष्णश्रियमुदधिमिव ध्वान्तराशिं पिबन् स्ता-
दौर्वः पूर्वोऽप्यपूर्वोऽग्निरिव भवदघप्लुष्टयेऽर्कावभासः॥३५॥

अर्कावभासः सूर्यप्रकाशो भवदघप्लुष्टये भवद्दुरितदाहाय भवेत् । क इव । अपूर्वो नवीनोऽन्यादृश और्वोग्निर्वाडवानल इव । कीदृशः पूर्वोपि । पूर्वदिगवच्छिन्नोपि । अपिशब्देन पूर्वोप्यपूर्व इति विरोधो द्योत्यते । तत्परिहारस्त्वर्थभेदात् । किं कुर्वन् । ध्वान्तराशिं पिवन् शोषयन् । कमिव उदधिमिव । कीदृशं ध्वान्तराशिम् । क्वचिद्देशे अभिनवयाऽरुणस्य भासा भिन्नं स्वल्पदेशव्यापित्वेनारुणकान्त्यापि श्रितम् । कयेव । विद्रुमाणां प्रवालानां त्विषेव मिश्रितमुदधिम् । पुनः कीदृशम् । क्वचित् च त्वङ्गन्नितस्ततः प्रसरन्नक्षणाण्येव रत्नानि तेषां यो द्युतिनिवहः कान्तिसमूहस्तेन करालं दन्तुरं व्याप्तमिति यावत् । ईदृशमन्तरालं मध्यं यस्य तथाभूतम् । उदधिरपि नक्षत्रतुल्यरत्नद्युतिनिवहकरालान्तरालो भवति । पुनः कीदृशं ध्वान्तराशिम् । अन्तरिति । अन्तर्मध्ये निश्रितः शेषो नागः कृष्णः श्रीनानारायणः श्रीलक्ष्मीश्च यस्मिन्नीदृशम् । पुराणोक्तेर्यस्मिन् शेषकृष्णश्रियो निश्रिता इत्यर्थः । अनेन प्रकारेणार्कावभासस्यौर्वतुल्यत्वम् । अपूर्वत्वन्त्वौर्वो जलधिमेव पातुं समर्थोऽयं तु ध्वान्तराशिं पीत्वा अघमपि दग्धुं समर्थ इति । भिन्नमिति। भिदिः संसर्गार्थो धातुस्तस्य रूपम्। सम्भेदइति तत्प्रयोगः प्रसिद्धः।"सम्भेदः सिन्धुसङ्गमे" इति कोषे सङ्गममात्रेऽपि प्रयुक्तः । गोवर्द्धनाचार्यकृतसंस्कृतार्यासप्तशत्यां यथा " दूरस्थायिहृदयो गूढरहस्यो निकामकाठिन्यः । आश्लेषो बालानां भवति खलानाञ्च सम्भेदः" इति"करालो दन्तुरे तुङ्गे" इत्यमरः। निःशेषेत्युदधिपक्षे निश्रिताः शेषकृष्णश्रिया यस्मिन्निति । प्रादिभ्यो धातुजस्येत्युत्तरपदलोपी बहुव्रीहिः । प्रयत्नोत्क्षिप्तोऽयभ्रं नभ इतिवत् । प्लुष्टये इति प्लुषदाह इति धातोर्भावे क्तिनि रूपम् ॥ ३५ ॥

अथ षट्त्रिंशं पद्यम्—

**गन्धर्वैर्गद्यपद्यव्यतिकरितवचोहृद्यमातोद्यवाद्ये-**
**राद्यैर्यो नारदाद्यैर्मुनिभिरभिनुतोवेदवेद्यैर्विभिद्य ।**
**असाद्यापद्यते यं पुनरपि च जगद्यौवनं सद्य उद्य-**
**न्नुद्योतो द्योतितद्यौर्द्यतु दिवसकृतो सावद्यानि वोऽद्य॥३६॥**

गन्धर्वैर्गद्यपद्यव्यतिकरितवचो दिवसकृतो दिनकरस्य उद्यन्नुदितो भवन्नसावुद्योतः प्रकाशः अद्य वो युष्माकं अवद्यानि अनिष्टानि द्यतु खण्डयतु । असौ

कः । यो गन्धर्वैः दिव्यगायनैः, आतोद्यवाद्यैः । सहगद्यपद्येति । गद्यानि छन्दोरहितानि काव्यानि, पद्यानि छन्दोबद्धानि तैर्व्यतिकरितानि सम्पृक्तानि यानि वचांसि तैर्हृद्यं रमणीयं यथाभवत्यवम्, अभिनुतो अभिष्टुतः । पुनराद्यैः प्राचीनैः वेदवेद्यैः । वदेन वेदयितुं निरूपयितुं योग्यैः नारदाद्यैर्मुनिभिर्विभिद्य पृथक् कृत्य विविच्येति यावत् । योऽभिनुतः पुनर्यमासाद्य प्रातः प्राप्य जगत्सद्यो यौवनमापद्यते प्राप्नोति । दिनावसाने जीर्णमिव स्थित्वा प्रातर्यत्संबन्धात्प्राप्तयौवनमिव सर्वकार्यक्षमं भवतीत्यर्थः । पुनः कीदृशः । द्योतिता द्यौराकाशो येन स तथा । आतोद्यवाद्ययोः कोषे "चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम्" इत्येकार्थत्वाभिधानेऽपि षड्भेदा ज्ञेयाः । यथा आतोद्यं वीणाकाहलादि । यत्र रागा अभिव्यज्यन्ते । वाद्यन्तु तालव्यञ्जकं मृदङ्गपणवादि । तद्विवक्षया कविनैवं प्रयुक्तम् । "गद्यपद्ये कृतौ कवेः" इत्यमरः । द्यतु इति दो अवखण्डन इत्यस्य रूपम् । अवद्यानि इति गर्ह्यार्थे अवद्यपण्येत्यादिना निपातितम् ॥ ३६ ॥

अथ सप्तत्रिंशं पद्यम्—

**आवानैश्चन्द्रकान्तैश्च्युततिमिरतया तानवात्तारकाणा-**
**मेणाङ्कालोकलोपादुपहतमहसामोषधीनां लयेन ।**
**आरादुत्प्रेक्ष्यमाणा क्षणमुदयतटान्तर्हितस्याहिमांशो-**
**राभा प्राभातिकी वोऽवतु न तु नितरां तावदाविर्भवन्ती ।३७**

अहिमांशोः प्राभातिकी आभा वो युष्मानवतु । कीदृशस्य हिमांशोः । क्षणमुदयपर्वततटेनान्तर्हितस्य । कीदृशी आभा । उक्तैर्हेतुभिरारात्समीपे उत्प्रेक्ष्यमाणा तर्क्यमाणा । तु पुनः । तावत्प्रथमं नितरामतिशयेनाविर्भवन्ती । तानेव हेतूनाह आवानैरिति । आवानैश्चन्द्रालोकाभावादीषच्छुष्कैश्चन्द्रकान्तैर्मणिभिः । पुनः च्युततिमिरतया । आकाशस्येति शेषः । पुनस्तारकाणां तानवात्तनुत्वात् । पुनरेणाङ्कस्य चन्द्रस्य य आलोकस्तल्लोपात् । पुनरुपहतमहसां निरस्ततेजसामोषधीनां लयेन सूक्ष्मत्वाददर्शनेन । रात्रावोषधयो निजतेजसा ज्वलन्तीति प्रसिद्धेः । आवानैरित्याङ्पूर्वस्य ओवैशोषण इतिधातोर्निष्ठायां रूपम् । ओदितश्चेति निष्ठा तकारस्य नः । "शुष्केवानमुभे त्रिषु" इत्यमरः । "आरात् दूरसमीपयोः" इति च । "उदयः पर्वतः" इत्यपि ॥ ३७ ॥

अथाष्टात्रिंशं पद्यम्—

सानौ सा नौदये नाऽरुणितदलपुनर्यौवनानां वनाना-
मालीमाऴीढपूर्वा पारहृतकुहरो पान्तनिम्ना तनिम्ना ।
भा वोऽभावोपशान्तं दिशतु दिनपतेर्भासमाना समाना
राजी राजीवरेणोः समसमयमुदेतीव यस्या वयस्या ॥३८॥

दिनपतेः सा भा वो युष्माकमभावोपशान्तिं अनुद्भवोपशमं दिशतु करोतु । सा का । यस्याः भाया वयस्या सहचरीव । राजीवरेणोः कमलपरागस्य राजी पंक्तिः समसमयं तुल्यकालमुदेति उद्गच्छतीव । वयस्ययोः साहचर्यनियमादुत्प्रेक्षा । कीदृशी भा । औदये उदयपर्वतसंबन्धिनीसानौ प्रस्थे शिखरे वनानामालीं पंक्तिमालीढपूर्वा पूर्वंप्राप्ता न इति न किन्तु पूर्वंप्राप्तैवेत्यर्थः। द्वौ नञौ प्रकृतमर्थं गमयतः इति वचनात् । कीदृशानां वनानां अरुणितानि सूर्यभासा रक्तीकृतानि यानि दलानि पर्णानि तैः पुनर्यौवनं जीर्णानामपि येषाम् । पुनः कीदृशी । तनिम्ना तनुत्वेन परिहृतानि त्यक्तानि कुहराणि गुहान्तराणि उपान्तानि निम्नानि गम्भिरस्थलानि यया सा । तनुत्वात्कुहरादीनि तावन्न व्याप्तवतीत्यर्थः । पुनः कीदृशी । भासमाना पुनरसमाना अतुल्या अनुपमेत्यर्थः । आलीढेत्यादि कर्मकर्त्तरि क्तः । यद्वा आङ्पूर्वकस्य लिहेर्गत्यर्थकत्वमाश्रित्य गत्यर्थेत्यादिना कर्त्तरि क्तः । पूर्वमालीढा आलीढपूर्वेति । मयूरव्यंसकादित्वात्समासः ॥ ३८ ॥

अथैकोनचत्वारिंशं पद्यम्—

उज्जृम्भाम्भोरुहाणां प्रभवति पयसां या श्रिये नोष्णतायै
पुष्णात्यालोकमात्रं न तु दिशति दृशां दृश्यमानाविघातम् ।
पूर्वाद्रेरेव पूर्वं दिवमनु च पुनः पावनी दिङ्मुखाना-
मेनांस्यैनी विभाऽसौ नुदतु नुतिपदैकास्पदं प्राक्तनी वः॥३९॥

प्राक्तनी ऐनी इनस्य सूर्यस्येयमैनी असौ दृश्यमाना विभा कान्तिर्वो युष्माकमेनांसि पापानि नुदतु दूरीकरोतु । असौ का । या उज्जृम्भाम्भोरुहाणां विकसितकमलानां श्रिये शोभायै भवत्युष्णतायै न, प्रथमं स्वकीयनिखिलप्रतापाप्रकटनात् । पुनर्दृशां नेत्राणां आलोकमात्रं दर्शनव्यापारमात्रं पुष्णाति दृश्यमाना

सती अभिघातं तु न दिशति। पुनः पूर्वं पूर्वाद्रेरुदयाचलस्यैव पावनी पश्चाद्दिवम् आकाशमनुलक्षीकृत्य पावयित्वेत्यर्थः। दिङ्मुखानां पावनी पावयित्री। पुनर्नुतिपदानां स्तुतिशब्दानामेकं मुख्यमास्पदं स्थानम्। अजहल्लिङ्गः शब्दः। दिवमित्यत्रानुर्लक्षणइत्यनोः कर्मप्रवचनीयत्वेन तद्योगे कर्मप्रवचनीययुक्त इति द्वितीया। पावनी पावयित्रीत्यर्थः। कृत्यल्युटोबहुलम् इति कर्त्तरि ल्युटि स्त्रियां टिड्ढाणञिति ङीप्। पूर्वाद्रेर्दिङ्मुखानामित्यत्र कर्तृकर्मणोरिति षष्ठी। "इनः सूर्ये प्रभौ"इत्यमरः॥३९॥

अथ चत्वारिंशं पद्यम्—

**वाचां वाचस्पतेरप्यचलभिदुचिताचार्यकाणां प्रपञ्चै-**
**र्वैरिञ्चानां तथोच्चारितरुचिरऋचां चाननां चतुर्णाम्।**
**उच्येताचासु वाच्यच्युतिशुचि चरितं यस्य नोच्चैर्विविच्य**
**प्राच्यं वर्चश्चकासच्चिरमुपचिनुतात्तस्य चण्डार्चिषो वः॥४०॥**

तस्य चण्डार्चिष उष्णरश्मेः प्राच्यं प्राग्भवं वर्चस्तेजो वः श्रियं संपदं उपचिनुतात् पुष्णातु। चिरमिति पाठे व इति द्वितीयाबहुवचनम्। वो युष्मान् चिरमुपचिनुतात्पुष्णात्विति व्याख्येयम्। कीदृशं तत्। चकासच्छोभमानम्। तस्य कस्य। यस्य चरितमर्चासु पूजासु वाचस्पतेरपि वाचां प्रपञ्चैर्विस्तरैस्तथा वैरञ्चानां विरिञ्चिसंबन्धिनां चतुर्णामाननानाञ्च प्रपञ्चैर्वाग्विलासैरुच्चैरधिकं विविच्येदमित्थंभावेन नोच्येत वक्तुं न शक्येत अपारत्वेन दुर्वचनत्वात्। कीदृक् चरितम्। वाच्य इति। वाच्यं निन्दा तस्य च्युतिरपगमस्तया शुचि निर्मलम्। कीदृशीनां वाचस्पतेर्वाचां। अचलभिदिन्द्रस्तस्मिन्नुचितमाचार्यकमाचार्यत्वं याभ्यः। अतिपण्डितस्यापीन्द्रस्योपदेष्टृत्वयोग्यानामित्यर्थः। कीदृशानां वैरिञ्चानामाननानाम्। उच्चारिता रुचिरा ऋचो यैस्तादृशानाम्। समस्तवेदतात्पर्यज्ञानानामित्यर्थः। आचार्यस्य भाव आचार्यकम्। योपधाद्गुरूपोत्तमाद्वुञिति वुञिवोरनादेशे रूपम्। उच्चारितरुचिरऋचामित्यत्र ऋत्य इति प्रकृतिभावः। समासान्तविधेरनित्यत्वादृक्पूरित्यस्याऽप्रवृत्तिः। उच्येतेति शकि लिङिति लिङ्। वाच्यमिति। गर्ह्यौ हीनौ च वक्तव्याविति कोषात्तव्यान्तस्य वचो निन्दार्थशक्तत्वेन ण्यन्तस्यापि निन्दार्थकत्वमर्थाक्षिप्तम्। शब्दसिद्धिस्तु वचः ऋहलोरिति ण्यति वचोशब्दसंज्ञायामिति कुत्वाऽभावे भवति। प्राच्यमित्यत्र प्राग्भवमित्यर्थे द्युप्रागपागिति यत्। "विपर्यासे विस्तरे च प्रपञ्चः" इत्यमरः ॥ ४० ॥

अथैकचत्वारिंशं पद्यम्--

पूर्वाद्रेर्धातुरागस्तरुषु किसलयो विद्रुमौघः समुद्रे
दिङ्मातङ्गोत्तमाङ्गेष्वभिनवनिहितः सान्द्रसिन्दूररेणुः ।
सीम्नि व्योम्नश्च हेम्नः सुरशिखरिभुवो जायते यः प्रकाशः
शोणिम्नाऽसौ खरांशोरुषसि दिशतु वः शर्म शोभैकदेशः ॥४१॥

खरांशोरुष्णरश्मेः असौ शोभैकदेशः कान्तिपूर्वभागो वः शर्म दिशतु । असौ कः। य उषसि शोणिम्ना रक्तत्वेन । तत्र तत्रैवं जायते । तदाह । पूर्वाद्रेरित्यादि । पूर्वाद्रेरुदयपर्वतस्य धातुरागः मनःशिलागैरिकादिधातुरागरूपः । पुनस्तरुषु किसलयोऽभिनवोऽहतपल्लवः । पुनः समुद्रे विद्रुमाणां प्रवालानामोघः समूहः । पुनर्दिङ्मातङ्गानां दिग्गजानाम् उत्तमाङ्गेषु शृङ्गारार्थमभिनवो नवीनो निहितः सान्द्रो निविडः सिन्दूररेणुः च पुनर्व्योम्नः सीम्नि आकाशदेशे सुरशिखरी सुमेरुः तस्य भूः तस्या हेम्नः तत्सम्बन्धिसुवर्णस्य प्रकाश इति । पूर्वाद्रेरित्यत्रोपरिभागे इत्यध्याहार्यम् । पूर्वाद्राविति वा पाठ्यम् । सर्वत्र सप्तमीनिर्देशेन अत्र क्रमभङ्गप्रसङ्गात् । "ओघो वृन्देऽम्भसां रये" इत्यमरः ॥ ४१ ॥

अथ द्विचत्वारिंशं पद्यम्—

अस्ताद्रीशोत्तमाङ्गे श्रितशशिनि तमःकालकूटे निपीते
याति व्यक्तिं पुरस्तादरुणकिसलये प्रत्युषःपारिजाते ।
उद्यन्त्यारक्तपीताम्बरविशदतरोद्वीक्षिता तीक्ष्णभानो-
र्लक्ष्मीर्लक्ष्मीरिवास्तु स्फुटकमलपुटापाश्रया श्रेयसे वः ॥४२॥

तीक्ष्णभानोर्लक्ष्मीः शोभा वः श्रेयसे अस्तु । केव लक्ष्मीः, पद्मालयेव । कीदृशी सा । अस्ताद्रीति । अस्तनामा पर्वतश्रेष्ठस्तस्य उत्तमाङ्गे शिखरभागे श्रितशशिनि सति । तथा, तमःकालकूटे अन्धकाररूपहलाहले निपीते सति अन्तर्हिते सति । तथा, पुरस्तात्पूर्वभागे लक्षणया अरुणस्य रागो अरुण एव किसलयो यस्येदृशे प्रत्युषःपारिजाते, प्रभातरूपपारिजातवृक्षे व्यक्तिं प्राकट्यं याति सति । उद्यन्तीव उदयं गच्छन्ती । पुनः कीदृशी, आरक्तं प्रथमतः क्रमेण पश्चात्पीतं यदम्बरम् आकाशं, तत्र विशदतरमुद्वीक्षिता शुक्लभास्वरनिजरूपेण विलोकिता । पुनः

कीदृशी । स्फुटेति । स्फुटं विकसितं यत्कमलपुटं तदपाश्रया तदाश्रया । अन्यापि लक्ष्मीरीशस्य रुद्रस्योत्तमाङ्गे श्रितशशिनि क्षीरसागरोद्भूतचन्द्रभाजिपुनस्तमस्सदृशे कालकूटे रुद्रेण निपीते । पुनः पारिजाते व्यक्तिं याति सत्युदिता । पुनः आरक्त आसमन्तात् अनुरक्तो यः पीताम्बरो विष्णुः, तेन विशदतरमुद्वीक्षिता, पुनः स्फुटं कमलपुटमुपाश्रयो यस्या सा तादृशी ॥ ४२ ॥

अथ त्रिचत्त्वारिंशं पद्यम्—

**नोदन्वाञ्जन्मभूमिर्न तदुदरभुवो बान्धवाः कौस्तुभाद्याः**
**यस्याः पद्मं न पाणौ न च नरकरिपूरस्थली वासवेश्म ।**
**तेजोरूपापरैव त्रिषु भुवनतलेष्वादधाना व्यवस्थां**
**सा श्रीः श्रेयांसि दिश्यादशिशिरमहसो मण्डलाग्रोद्गता वः॥४३॥**

अशिशिरमहसः उष्णरश्मेर्मण्डलाग्रोद्गता सा श्रीः वः श्रेयांसि दिश्यात् । सा कीदृशी, तेजोरूपा अपरैव । प्रसिद्धा तु श्रीर्दैवतारूपा, इयं त्वन्यादृशी । विशेषणैर्वैसादृश्यमाह नोदन्वानित्यादिभिः । सा का, उदन्वान् यस्याः जन्मभूमिर्न पुनस्तदुदरभुव उदन्वदुदरादुत्पन्नाः कौस्तुभचन्द्राद्या यस्या बान्धवा भ्रातरो न । तथा पद्मं यस्याः पाणौ न । पुनः नरकरिपोः श्रीनारायणस्योरःस्थली यस्य वासवेश्म च न । कीदृशी । त्रिष्विति । त्रिभुवनतलेषु व्यवस्थां दिक्कालादिमर्यादां आदधाना कुर्वती । सा तु नेदृशी । अशिशिरमहसो मण्डलाग्रोद्गता श्रीरिति । अतितेजस्विनः शूरस्य मण्डलाग्रात् करवालाल्लक्ष्मीः पराक्रमेण प्रादुर्भवतीति लोकोक्तिध्वनिरत्र चमत्कारः । " कौक्षेयको मण्डलाग्रः करवालः कृपाणवत् " इत्यमरः ॥ ४३ ॥

अथ चतुश्चत्त्वारिंशं पद्यम्—

**रक्षन्त्वक्षुण्णहेमोपलपटलमलं लाघवादुत्पतन्तः**
**पातङ्गाः पङ्गवङ्गा जितपवनजवा वाजिनस्ते जगन्ति ।**
**येषां वीतान्यचिह्नोन्नयमपि वहतां मार्गमाख्याति मेरा-**
**वुद्यन्नुद्दामदीप्तिर्द्युमणिमणिशिला वेदिका जातवेदाः ॥४४॥**

त्रिचत्वारिंशत्पद्यैः श्रीसूर्यरश्मिवर्णनम्, अथ षड्भिः पद्यैरश्ववर्णनम् । ते पातङ्गाः सूर्यसम्बन्धिनो वाजिनो जगन्ति रक्षन्तु । कीदृशास्ते, अलमतिशयेन लाघ-

वात् गमनलाघवात् अक्षुण्णम् अचूर्णितम् मेरोर्हैमोपलानां पटलं समूहो यत्रैवं यथा भवति तथा उत्पतन्तः उत्फालेन गच्छन्तः शीघ्रगामितया । स्वर्णोत्पलेषु तेषां खुरस्पर्शोऽपि नास्तीत्यर्थः । पुनः कीदृशः । पङ्ग्विति । पङ्गोररुणस्यावज्ञया अल्पायासप्रेरणया हेतुना, अपिशब्दोत्राध्याहार्यः । पङ्ग्वाज्ञया जितः पवनस्य जवो-यैस्ते तादृशाः । अवज्ञया प्रेरणया मन्दगमनेऽपि पवनवेगं जयन्ति । सम्यक्प्रेरणायां तु वेगाधिक्ये किं वक्तव्यमित्यर्थः । यद्वा पङ्गौ पुरुषे जङ्घालेन क्रियमाणाया अ-वज्ञायाः पवनं पङ्गुतुल्यं गणयित्वेत्यर्थः । जितः पवनजवो यैस्ते तथा । ते के । उद्यन्नुदितो भवन्नुद्दामदीप्तिरतितीव्रतेजोद्युमणिमणयः सूर्यकान्तास्ता एव शिलावेदिकाः पाषाणरचितवेद्यः तासां जातवेदाः तदुद्गतो वह्निर्मेरौ येषां मार्ग-माख्याति द्रष्टान्प्रतिज्ञापयति । किम्भूतानां येषाम् । वीतेति । वीतो निवृत्तोऽन्यचि-ह्नानाम्नुन्नय उद्गनम् यत्रैवं यथा भवति तथा वहतां गच्छतां । वहिर्गत्यर्थे अकर्मकः । अयमर्थः, गमनलाघवादश्वखुरैर्मार्गस्थसुवर्णशिलानामचूर्णितत्वेन खुरचिह्नाभा-वात् । तन्मार्गानभिव्यक्तावपि सूर्यतेजःसंपर्कोद्भूतरविकान्तजातवेदसा चिह्ने-नाश्वमार्गोऽनुमीयत इति । अन्योऽपि जातवेदा वेद्यामुद्दीप्तो भवतीति शिलावेदिका जातवेदा इत्युक्तम् । "छर्दिर्नेत्ररुजोः क्लीवं समूहे पटलं न ना" इत्यमरः "पतङ्गौ पक्षिसूर्यौ" च । "स्याद्वितर्दिस्तु वेदिका" इति च ॥ ४४ ॥

अथ पञ्चचत्वारिंशं पद्यम्--

**प्लुष्टाः पृष्ठोंऽशुपातैरतिनिकटतया दत्तदाहातिरेकै-**
**रेकाहाक्रान्तकृत्स्नत्रिदिवपथपृथुश्वासशोषाः श्रमेण ।**
**तीव्रोदन्यास्त्वरन्तामहितविहतये सप्तयः सप्तसप्ते-**
**रभ्याशाकाशगङ्गाजलसरलगलावर्जिताग्राननाव: ॥ ४५ ॥**

सप्तसप्तेः सप्ताश्वस्य श्रीसूर्यस्य सप्तयो वाहा वो युष्माकमहितविहतयेऽनि-ष्टविघाताय त्वरतां त्वरां कुर्बन्तु । कीदृशास्ते पृष्ठं पृष्ठभागे अंशुपातैः सूर्यकिरण-पातैः प्लुष्टा दग्धा इव । कीदृशैरंशुपातैः । अतिनिकटतया दत्तो दाहातिरेको यैस्ता-दृशैः । पुनः कीदृशाः । एकाहेनैकदिनेनाक्रांतः कृत्स्नो यस्त्रिदिवपथः स्वर्गमार्गस्तेन पृथुः श्वासः शोषश्च येषान्ते तथा । पुनः कीदृशाः । श्रमेण तीव्रोदन्याः तीव्रा उद-न्या पिपासा येषां ते तादृशाः । अतएव अभ्याशे निकटे या आकाशगङ्गा तज्जले सरलगलाश्च ते, आवर्जिताग्राननाश्च आवर्जितं नमितमग्राननमाननायं यैस्ते तथा-

भूताः । अनिशं वाह्यमाना अश्वत्वपादयो दीर्घमार्गे रविकिरणतप्ताः श्रमजातपिपासातिरेकाच्छन्दत एव पार्श्वस्थितजले गलं सरलीकृत्य मुखाग्राण्यावर्जयन्तीति जातिवर्णनमिदम्। "ग्रुष्टप्लुष्टोषिता दग्धे" इत्यमरः। एकाह इत्यत्र राजाहःसखिभ्य इति टच् । त्रिदिवपथ इत्यत्र ऋक्पूरब्धूःपथामिति अप्रत्ययः। "उदन्या तु पिपासा तृट्"इत्यमरः । अग्रानना इति आननस्याग्रमिति समासे तलाग्रादयोवेति वाच्यमित्यग्रशब्दस्य वैकल्पिकः पूर्वनिपातः । "हयसैन्धवसप्तयः" इत्यमरः ॥ ४५ ॥

अथ षट्चत्वारिंशं पद्यम्—

मत्वान्यान्पार्श्वतोऽश्वान्स्फटिकतटदृषदृष्टदेहा द्रवन्ती
व्यस्तेऽह्न्यस्तसन्ध्येयमिति मृदुपदा पद्मरागोपलेषु ।
सादृश्यादृश्यमूर्त्तिर्मरकतकटके क्लिष्टसूता सुमेरो-
र्मूर्द्धन्यावृत्तिलब्धध्रुवगतिरवतात् ब्रध्नवाहावलिर्वः ॥ ४६ ॥

ब्रध्नवाहावलिर्वो युष्मानवतात्। कीदृशी सा। स्फटिकतटे सुमेरोः स्फटिकमणिमये तटे प्रतिबिम्बेन दृष्टो देहो यया इदृशी सती पार्श्वतोन्यानश्वान्मत्वा द्रवन्ती योद्धुं तदभिमुखं गच्छन्तीति जात्युक्तिरियम्। पुनः कीदृशी सुमेरुमध्यवर्तिषु पद्मरागोपलेषु पद्मरागरूपपाषाणेषु। व्यस्ते समाप्तेऽहनि अस्तसन्ध्येति मत्वा मृदुपदा मन्दागमना । तत्र पद्मरागकान्तेः सायं सन्ध्यावत्प्रतिभासमानत्वेन दिनगम्यमार्गस्यातिवाहितत्वबुध्या द्रुतगतिं विहाय शनैर्गच्छन्तीत्यर्थः। पुनः कीदृशी । सुमेरोर्मरकतकटके मरकतमयनितम्बे तत्कान्तिसादृश्येन तादृश्या मूर्तिर्यस्याः सा तादृशी । अत एव क्लिष्टः क्लेशं मापितः सूतो यया सा, पूर्वोक्तप्रकारेण मन्दगमने प्रतोदेन शीघ्रं चालयतुमिच्छतोऽरुणस्यादृश्यत्वात्तं क्लेशयन्तीत्यर्थः। पुनः कीदृशी । मेरोर्मूर्द्धन्यावृत्त्या पौनः पुन्येन लब्धा ध्रुवा संतता गतिर्यया सा तादृशी । "कटकोऽस्त्री नितम्बोद्रेः" इत्यमरः ॥ ४६ ॥

अथ सप्तचत्वारिंशं पद्यम्—

हेलालोलं वहन्ती विषधरदमनस्याग्रजेनावकृष्टा
स्त्वर्वाहिन्याः सुदूरं जनितजवजया स्यन्दनस्य स्यदेन ।
निर्व्याजं तायमाने हरितिमनि निजे स्फीतफेनाहितश्री-
रश्रेयांस्यश्वपङ्क्तिः शमयतु यमुनेवापरा तापनी वः ॥ ४७ ॥

तापनी तपनसम्बन्धिन्यश्वपङ्क्तिर्वो युष्माकमश्रेयांस्यमङ्गलानि शमयतु। केव। अपरा अन्या यमुनेव। सापि तापिनी तपनस्यापत्यम् । कीदृशी अश्वपङ्क्तिः। हेलालोलं हेलया लीलया लोलं चपलं यथाभवत्येवं वहन्ती गच्छन्ती। यमुनापक्षे वहन्ती प्रवहन्ती। पुनः कीदृशी। विषधरेति। विषधराः सर्पास्तेषां दमनो गरुडस्तस्याग्रजोऽरुणस्तेन रश्मिभिः अवकृष्टा। यमुना कीदृशी। विषधरः कालियस्तस्य दमनः श्रीकृष्णस्तस्याग्रजेन बलदेवेन हलाग्रेणाकृष्टा प्रवाहप्रतपश्चालिता। पुनः कीदृशी अश्वपङ्क्तिः। स्वरिति। स्यन्दनस्य रथस्य स्यदेन वेगेन स्वर्वाहिन्या देवसेनायाः लक्षणया वाहिनी वर्तिवाहनानां जनितो जवस्य जयो यया सा तादृशी। यदा दैत्यराक्षसादियुद्धप्रसङ्गेन स्वः सेनायां गच्छन्त्यां तदा जवेनान्यवाहनानि जयतीत्यर्थः। यमुना कीदृशी स्यन्दस्य प्रवाहस्य वेगेन स्वर्वाहिन्या गङ्गाया जनितजवजया। पुनः कीदृशी अश्वपङ्क्तिः। निर्व्याजमिति। निर्व्याजं निःकपटमकृत्रिमं तायमाने स्वयमेव प्रसरति निजहरितिमनि स्वकीये हरिद्वर्णे स्फीतः प्रवृद्धो यः फेनो मुखे श्रमजो डिंडीरस्तेन आहिता वर्णद्वयसाङ्कर्येण विचित्रत्वात्सम्पादिता शोभा यस्यां सा तादृशी। यमुनापि। निर्व्याजमिति। स्फीतो यः फेनस्तरङ्गान्दोलनेन जले समुद्भूतस्तेनाहितश्रीः। हरितिमनि निजे इति पाठेऽपि स एवार्थः। "ध्वजिनी वाहिनी सेना" इत्यमरः। "स्रवन्त्यामपि वाहिनी"इत्यपि। "शताङ्गः स्यन्दनो रथः" इति च। यमुना पक्षे स्यन्दनं प्रस्रवणम्, स्यन्दूप्रस्रवण इति धात्वर्थात्। "रयः स्यन्दः" इत्यमरः। "डिण्डिरोऽब्धिकफः फेनः" इति च। अत्र श्लेषः चित्रम्॥ ४७॥

अथाष्टचत्वारिंशं पद्यम् —

**मार्गोपान्ते सुमेरोर्नुवति कृतनतौ नाकधाम्नां निकाये**
**वीक्ष्य व्रीडावतीनां प्रतिकुहरमुखं किन्नरीणां मुखानि।**
**सूतेऽसूयत्यपीषज्जडगति वहतां कन्धरार्द्धैर्वलद्भि-**
**र्वाहानां व्यस्यताद्वः सममसमहरेर्हेषितं कल्मषाणि॥ ४८॥**

असमहरेः सप्ताश्वस्य श्रीसूर्यस्य वाहानां सममेककालमेव हेषितं तज्जातिनिस्वनो वः कल्मषाणि पापानि व्यस्यतात् विक्षिपतु। कीदृशानां वाहानां सुमेरोर्मार्गोपान्ते कृतनुतौ कृतनमस्कारे नाकधाम्नां देवानां निकाये नुवति स्तुवति सति। ततः पश्यन्तीनां किन्नरीणां तुरङ्गवदनस्त्रीणां मुखानि देवान्वीक्ष्य

लज्जावशाद्देहानां कुहरान्तर्लीनत्वान्मुखान्येव प्रतिकुहरमुखं सुमेरुकन्दराणां मुखे मुखे वीक्ष्य सूते अरुणे मन्दगमनादसूयत्यपि कुप्यत्यपि, वलद्भिः तुरङ्गवदनस्त्री-मुखाभिमुखं तिर्यक्परिवृत्तैः कन्धरार्द्धैः ईषज्जडामन्दागतिर्यत्रैवं यथा भवति तथा वहतां चलताम् । अश्वाः मध्ये मार्गे गच्छन्तः पार्श्वतोऽन्यान्वीक्ष्य ह्रेषमाणास्तदभिमुखा भवन्तीत्यश्वजातिस्वभावः । "स्यात्किन्नरः किंपुरुषस्तुरङ्गवदनो मयुः" इत्यमरः। "ह्रेषा ह्रेषा च निस्वने" इत्यपि ॥ ४८ ॥

अथैकोनपञ्चाशं पद्यम्—

धुन्वन्तो नीरदालीर्निजरुचिहरिताः पार्श्वयोः पक्षतुल्या-
स्तालूत्तानैः खलीनैः खचितमुखरुचश्च्योतता लोहितेन ।
उड्डीयेव व्रजन्तो वियति गतिवशादर्कवाहाः क्रियासुः
क्षेमं हेमाद्रिहृद्यद्रुमशिखरशिरःश्रेणिशाखाशुका वः ॥ ४९ ॥

अर्कवाहा वः क्षेमं क्रियासुः । किम्भूताः । नीरदालीर्घनपङ्क्तीर्धुन्वन्तः कम्पयन्तः । कीदृशीर्नीरदालीः । निजरुचिहरिताः स्फटिकवत्स्वच्छत्वेन प्रतिबिम्बि-तस्वकान्त्या हरिताः । पुनः कीदृशीः । पार्श्वयोरश्वानां पक्षतुल्याः । पुनः कीदृशा अर्कवाहाः तालूत्तानैस्तालुभागे उन्नतैः खलीनैः कविकाभिर्हेतुभिः श्च्योतता स्रवता लोहितेन रुधिरेण खचिता व्याप्ता मुखरुचो मुखकान्तयो येषान्ते तथा । हरिद्वर्णे मुखे रक्तसम्बन्धाद्वर्णवैचित्र्येण परमशोभां लभमाना इत्यर्थः । ये वाहा मुखे कठिना भवन्ति तेऽपर्युन्नतैः खलीनैस्तालुवदनाद्दम्यन्त इति लोकप्रसिद्धिः । पुनः कीदृशाः अर्कवाहाः । हेमाद्रीति । हेमाद्रिर्मेरुरेव हृद्यो रमणीयो द्रुमस्तस्य शिखराणि शृङ्गाणि तेषां शिरःश्रेणयोऽग्रपङ्क्तयस्ता एव शाखास्तत्सवन्धिनः शुका इति रूपकम् । हरिद्वर्णत्वेन हेमाद्रिद्रुमाग्रशाखारोहणेन नीरदरूपपक्षान्वित-त्वेनाकाशोड्डयनेन च शुकवत् प्रतीयमाना इत्यर्थः । अत्राश्वले शकारानुप्रासः । ॥ ४९ ॥

इत्यश्ववर्णनम्

अथ पञ्चाशं पद्यम्—

प्रातःशैलाग्ररङ्गे रजनिजवनिकापायसंलक्ष्यलक्ष्मी-
र्विक्षिप्यापूर्वपुष्पाञ्जलिमुडुनिकरं सूत्रधारायमाणः ।

यामेष्वङ्केष्विवाह्नः कृतरुचिषु चतुर्ष्वेव यातःप्रतिष्ठा-
मव्यात्प्रस्तावयन्वो जगदटनमहानाटिकां सूर्यसूतः॥ ५० ॥

सूर्यसूतो वः अव्यात्। किं कुर्वन्। जगदिति। जगति यदटनं परिभ्रमणं सैव महानाटिका तां प्रस्तावयन् प्रस्तावयुक्तां कुर्वन्। किं विशिष्टः सः। प्रातःकाले शैल उदयपर्वतस्तस्याग्रं तदेवरङ्गो नाट्यस्थलं तत्र उडुनिकरं अपूर्वाण्यद्भुतानि कदापि न शुष्यन्ति यानि पुष्पाणि तेषां अञ्जलिं विक्षिप्य प्रकीर्य सूत्रधारायमाणः सूत्रधारो मुख्यनटो नाट्येप्रसिद्धः स इवाचरन्। किम्भूतः। रजनी रात्रिरेव जवनिका तिरस्करणी तस्या अपायोऽपसारणं तेन संलक्ष्या लक्ष्मीः शोभा यस्य सः। तथा सूत्रधारोपि प्रथमं जवनिकान्तरान्निर्गत्य रङ्गे प्रेक्षकाणामग्रे पुष्पाञ्जलिं निक्षिप्य नाट्यप्रस्तावनां करोति इति नाट्यरीतिः। पुनः कि विशिष्टः। अन्हश्चतुर्ष्वव यामेषु प्रतिष्ठां स्थितिं यातः। तदनन्तरं तु द्वीपान्तरं गच्छतीत्यर्थः। कीदृशेषु यामेषु। कृतरुचिषु कृतदीप्तिषु। केष्विव। अङ्केष्विव। कीदृशेष्वङ्केषु। कृताऽपेक्षकाणां रुचिः प्रीतिर्यैस्ते तथा तेषु। यः सूत्रधारो नाटिकां प्रस्तावयति। सोपि चतुर्ष्वङ्केषु प्रतिष्ठां गच्छति। नाटकानि बहुविधानि दशरूपकादिनाट्यालङ्कारग्रन्थेषु प्रोक्तानि तेषां प्रकरणान्यङ्काश्च तत्रैव दर्शिताः। कानिचिद्दशाङ्कानि कानिचित्षडङ्कानि इत्यादयोन्येपि भेदाः सन्ति। तत्र चतुरङ्कानाटिकोक्ता तत्प्रसङ्गोऽत्र वर्णित इति महच्चातुर्यम्। क्वचित्प्रस्तारयन्निति पाठो वर्तते सत्वनाकरः। नाट्येप्रस्तावना एव प्रसिद्धेः। "प्रतिसीराजवनिका स्यात्तिरस्करिणी च सा" इत्यमरः॥५०॥

अथैकपञ्चाशं पद्यम्—

आक्रान्त्या वाह्यमानं पशुमिव हरिणा वाहकोऽग्र्यो हरीणाम्
भ्राम्यन्तं पक्षपाताज्जगति समरुचिः सर्वकर्मैकसाक्षी।
शत्रुं नेत्रश्रुतीनामवजयति वयोज्येष्ठभावे समेपि।
स्थाम्ना धाम्नां निधिर्यः स भवदघनुदे नूतनः स्तादनूरुः॥५१॥

स नूतनो नवोदितः अनूरुररुणो भवदघनुदे भवत्पापापनोदाय स्तात्। स कः यः स्थाम्ना* बलेन नेत्रश्रुतीनां चक्षुःश्रवसां शत्रुं गरुडमवजयति।

* स्थाम्नामिति षष्ठ्यन्तं धाम्नामित्यस्य विशेषणतया क्वचित्पाठः

जयहेतुमुत्कर्षमाह। आक्रान्त्येति। कीदृशं नेत्रश्रुतीनां शत्रुम्। हरिणा आक्रान्त्या आक्रमणेन उपर्यारुह्य पशुमश्वरूपादिमिव वाह्यमानम्। कीदृशोऽनूरुः। हरीणामग्र्यः श्रेष्ठो वाहकः। कीदृशं नेत्रश्रुनां शत्रुम्। पक्षपातात्, पक्षाभ्यां पातात् पतनात् भ्राम्यन्तम्। कीदृशोऽरुणः। सर्वेति। सर्वेषां कर्मणामेकः साक्षी सन् समरुचिः समा एकरूपा रुचिर्दीप्तिर्यस्य पुनः। समा सर्वेषु तुल्या रुचिः प्रीतिर्यस्य सः। साक्षी सन्निःपक्षपात इत्यर्थः। गरुडस्तु पक्षपाताद् भ्राम्यति। एकेन हरिणा आक्रम्य वाह्यते। अयं तु बहून्हरीन्वाहयाति, अग्र्यश्च, बहुमानेन रथिनोऽग्रे उपविष्टः। पुनः कीदृशः अरुणः। धाम्नां तेजसां निधिः सातत्येनाश्रयः। गरुडस्तु मातुः सपत्नीदासभावेन सर्पाणां सेवया कदाचिन्म्लानोऽपीति शेषः। कस्मिन्सत्यवजयति। वयोज्येष्ठभावे समे उभयोस्तुल्येऽपि अरुणस्य गरुडाद्वयोज्येष्ठत्वं लोकप्रसिद्धम्। गरुडस्य तु वयोज्येष्ठभावो न प्रसिद्ध इत्यपि शब्देन द्योत्यते। तत्सङ्गतिस्तु गरुडपक्षे वयसां पक्षिणां मध्ये श्रेष्ठत्वं वयोज्येष्ठभाव इति। "हरी विष्णुहर्यो" इत्यनेकार्थकोषः। "खगबाल्यादिनोर्वयः" इत्यमरः। "द्रविणं तरःसहोबलशौर्याणि स्थाम शुष्मं च" इत्यपि। ज्येष्ठ इति अतिशयेन वृद्धो ज्येष्ठः। अतिशयेन प्रशस्यो ज्येष्ठ इतीष्ठनि, वृद्धस्य चेतिवृद्धशब्दस्य ज्यादेशे ज्यचेति प्रशस्यशब्दस्य च ज्यादेशे रूपम्॥५१॥

अथ द्विपञ्चाशं पद्यम्—

**दत्तार्घैर्दूरनम्रैर्वियति विनयतो वीक्षितः सिद्धसार्थैः**
**सानाथ्यं सारथिर्वः स दशशतरुचेः सातिरेकं करोतु।**
**आपीय प्रातरेव प्रततहिमपयः स्यन्दिनीरिन्दुभासो**
**यः काष्ठादीपनोऽग्रे जडित इव भृशं पृष्ठतः सेवतेऽर्कम्॥५२॥**

स दशशतरुचेः सहस्रकिरणस्य सारथिररुणो वः सातिरेकं सातिशयं सानाथ्यं सनाथत्वं करोतु युष्मदपेक्ष्यं करोत्वित्यर्थः। स कः। यः प्रातरेव प्रततं विस्तृतं यद्धिमपयस्तत्स्यन्दिनीरिन्दुभास आपीय भृशं जडित इव शीतार्त्त इव पृष्ठतोऽर्कं सेवते। कीदृशः। अग्रे काष्ठा दीपनः सूर्यात्पूर्वं काष्ठानां दिशानां दीपनः प्रकाशकः। अथ च अग्रे अग्रभागे काष्ठान्यादीपयति ज्वलयति तथा। यो हि प्रातरेव पिपासाधिक्याद्धिमजलं पिबति स जातजाड्यः, अग्रे वह्निं प्रज्याल्य पृष्ठभागेन सूर्यातपं सेवते। तदुक्तं वैद्यके "पृष्ठतः सेवयेदर्कं जठरेण हुताशनम्" इति।

कीदृशः सारथिः । वयति सिद्धसार्थैर्विनयतो वीक्षितः । कीदृशः । दत्तार्घो यैस्ते तथा तैः । पुनर्दूरान्नम्रैः । आपीयेत्यरुणा पक्षे अन्तर्धायेत्यर्थः । पदसिद्धिस्तु-पीङ्पाने इत्यस्मात् क्त्वोल्यपि वोध्या । पापाने इत्यस्य न ल्यपीतोत्वनिषेधात् । सानाथ्यमिति सनाथस्य भाव इत्यर्थे दृढादित्वात्ष्यञि रूपम् ॥ ५२ ॥

अथ त्रिपञ्चाशं पद्यम् ।

**मुञ्चन् रश्मीन्दिनादौ दिनगमसमये संहरंश्च स्वतन्त्र-**
**स्तोत्रप्रख्यातवीर्योऽविरतहरिपदाक्रान्तिबद्धातियोगः ।**
**कालोत्कर्षाल्लघुत्वं प्रसभमधिपतौ योजयन्यो द्विजानाम्**
**सेवाप्रीतेन पूष्णा स्वसम इव कृतस्त्रायतां सोऽरुणो वः॥५३॥**

सोऽरुणो वस्त्रायताम् । स कः । यः सेवाप्रीतेनाहर्निशसेवया तुष्टेन पूष्णा स्वसम इव कृतः । पूषसाम्यमेवाह—मुञ्चन्नित्यादि । दिनादौ स्वतन्त्रो रश्मीन्प्रग्रहानश्वानां मुञ्चन् प्रसारयन् । पुनर्दिनगमसमये दिनसमाप्तौ संहरन्मार्गस्यातिक्रान्तत्वादाकर्षन्नित्यर्थः । पूषापि रश्मीन् किरणान् दिनस्यादौ मुञ्चति विस्तारयति समाप्तौ संहरति । पुनः कीदृशोऽरुणः । तोत्रेण प्रतोदेन प्रख्यातपराक्रमः । पूषास्तु स्तोत्रेण वालखिल्यादि ऋषिकृतेन प्रख्यातमन्देहरक्षोहननरूपं वीर्यं यस्य-तादृशः । अस्मिन्पक्षे स्वतन्त्रशब्दे खर्परे शरीत्यनेन वा विसर्गलोपः । पुनः कीदृशोऽरुणः । अविरतेति । अविरतं निरन्तरं हरीणाम् अश्वानां पदाक्रान्तिः पदाक्रमणं पादचलनम्, तत्र बद्धोतियोगोऽत्युद्यमो येन । शैघ्र्यमान्द्यलक्षणयाऽश्वानां पदसंचारे दत्तदृष्टिरित्यर्थः । पूषा तु अविरतं हरिपदस्य विष्णुपदस्याकाशस्याक्रमणे बद्धातियोगः । पुनः कीदृगरुणः । कालेति । कालस्य वयोलक्षणस्योत्कर्षादाधिक्यात् प्रसभं द्विजानां पक्षिणाम् अतिपतौ गरुडे लघुत्वं कनिष्ठत्वं योजयन्नयन् । पूषापि कालस्य स्वोदयसमयस्योत्कर्षाद् द्विजानां ब्राह्मणानामधिपतिं चन्द्रं प्रसभं कृत्वा योजयति । "किरणप्रग्रहौ रश्मी" इत्यमरः । "प्राजनं तोदनं तोत्रम्" इत्यपि । "वियद्विष्णुपदम्" इति च । "योगः संहननोपायध्यानसंहतियुक्तिषु" इति च ॥ ५३ ॥

अथ चतुःपञ्चाशं पद्यम् ।

**शातः श्यामालतायाः परशुरिव तमोरण्यवह्नेरिवार्चिः**
**प्राच्येवाग्रे ग्रहीतुं ग्रहकुमुदवनं प्राग्य्युदस्तोऽग्रहस्तः ।**

**ऐक्यं भिन्दन्द्युभूम्योरवधिरिव विधातेव विश्वप्रबोधं**
**वाहानां वो विनेता व्यपनयतु विपन्नाम धामाधिपस्य ॥५४॥**

धामाधिपस्य त्विषाम्पतेर्वाहानां विनेता सारथिररुणो वो युष्माकं विपन्नाम विपदां नामापि व्यपनयतु । अत्रोत्प्रेक्षते-क इव । शातो निशितः श्यामालतायाः श्यामा रात्रिस्तद्रूपाया लतायाः परशुरिव छेत्ता । पुनः, तम एवारण्यं तद्दहनेः रर्चिरिव । पुनः, प्राच्या दिशा स्त्रिया कौतुकाद्ग्रहकुमुदवनं ग्रह एव कुमुदवनं तद्गृहीतुं उच्चेतुं प्राक्व्युदस्तः उपरि प्रसारितोऽग्रहस्तः हस्ताग्रभाग इव । किं कुर्वन् । द्युभूम्योः द्यावापृथिव्योरैक्यं भिन्दन् विभिद्य ज्ञापयन् । क इव । अवधिरिव सीमारेखादिरिव । पुनः कीदृशः । विश्वस्य जगतः प्रबोधं निद्रापनयनेन विधातेव । निश्चयेन कर्ता विधातेति ताच्छील्ये तन् । तद्योगे विश्वप्रबोधमित्यत्र न लोकेति कर्मषष्ठीनिषेधः । शात इति शोतनूकरण इतिधातोः क्त प्रत्यये शाच्छोन्यतरस्यामितीत्वाभावपक्षे रूपम् । अत्रोत्तरार्द्धे वकारानुप्रासः ॥ ५४ ॥

अथ पञ्चपञ्चाशं पद्यम्—

**पौरस्त्यस्तोयदर्तोः पवन इव पतत्पावकस्येव धूमो**
**विश्वस्येवादिसर्गः प्रणव इव परं पावनो वेदराशेः ।**
**सन्ध्यानृत्योत्सवेच्छोरिव मदनरिपोर्नन्दिनान्दीनिनादः**
**सौरस्याग्रे सुखं वो वितरतु विनतानन्दनः स्पन्दनस्य ॥५५॥**

सौरस्य सूरसम्बधिनो रथस्याग्रे उद्यन्निति शेषः । स विनतानन्दनोऽरुणो वः सुखं वितनोतु करोतु । अत्र दृष्टान्ताः पोरस्त्येति । तोयदर्त्तोर्वर्षर्तोः अग्रे पतन् गच्छन् पौरस्त्यः पूर्वदिग्भवः पवन इव । यथा पुरोवातो वर्षर्तोरग्रेऽवश्यं भवति तथा । पुनः पापकस्य वह्नेरग्रे धूम इव । पुनः विश्वस्य जगतोऽग्रे आदिसर्गो महत्तत्त्वादिसर्ग इव । पुनर्वेदराशेरग्रे परं अतिशयेन पावनः प्रणव इव । पुनः सन्ध्यानृत्योत्सवेच्छोर्मदनरिपोः शिवस्याग्रे नन्दिनो गणमुख्यस्य नान्दीनिनादः । नान्दी नाट्यारम्भे क्रियमाणो मङ्गलपाठस्तस्य । ननादो ध्वनिः पुरोभवः । पौरस्त्य इत्यत्र दक्षिणापश्चात्पुरस इति त्यक् ॥ ५५ ॥

अथ षट्पञ्चाशं पद्यम्—

**पर्याप्ते तप्तचामीकरकटकतटे श्लिष्टशीतेतरांशा-**
**वासीदत्स्यन्दनाश्वानुकृतमरकते पद्मरागायमाणः ।**
**यः सोत्कर्षां विभूषां कुरुत इव कुलक्ष्माभृदीशस्य मेरो-**
**रेनांस्यह्नाय दूरं शमयतु स गुरुः काद्रवेयद्विषो वः ॥५६॥**

स काद्रवेयद्विषः सर्पशत्रोः गरुडस्य गुरुर्ज्येष्ठो भ्राताऽरुणः अह्नाय शीघ्रं वो युष्माकमेनांसि पापानि दूरम् अत्यर्थं शमयतु । स कः । यः कुलक्ष्माभृदीशस्य कुलाचलश्रेष्ठस्य सुमेरोः सोत्कर्षामाधिक्येन सहितां विभूषां कुरुते इव । कीदृशः । पर्याप्ते परिपूर्णे विशाल इति यावत् । तप्तस्तापेन द्रवीभूतो यश्चामीकरकटकः सुवर्णनितम्बस्तत्तटे पद्मरागायमाणः पद्मरागमणीभवन् । कीदृशे तप्ततटे । श्लिष्टः संलग्नः शीतेतरांशुरुष्मांशुर्हारस्रूपो यस्मिन्तत्तथा तस्मिन् । पुनः कीदृशे । आसीदिति । सूर्यातपेन सुपर्णस्य द्रवीभावादासीदन्तोऽन्तर्भज्जन्तो ये स्यन्दनाश्वास्तैरनुकृतानि । मरकतानि हरिण्मणयो यस्मिंस्तत्तथा तस्मिन् । विभूषणमपि तप्तसुवर्णेन रचितं मध्ये हीरकमरकतपद्मरागादिखचितं क्ष्माभृदीशेन महाराजेन धार्यते तदत्र वर्णितम् । "स्राक् झटित्यंजसाह्नाय" इत्यमरः ॥ ५६ ॥

अथ सप्तपञ्चाशं पद्यम्—

**नीत्वाऽश्वान्सप्त कक्ष्या इव नियमवशं वेत्रकल्पप्रतोद-**
**स्तूर्णं ध्वान्तस्य राशावितरजन इवोत्सारिते दूरभाजि ।**
**पूर्वं पृष्ठो रथस्य क्षितिभृदधिपतीन्दर्शयंस्त्रायतां व-**
**स्त्रैलोक्यास्थानदानोद्यतदिवसपतेः प्राक्प्रतीहारपालः॥५७॥**

त्रैलोक्यास्थानदानोद्यतदिवसपतेः त्रैलोक्यमेवास्थानं सदस्तद्दाने उद्यत उत्सको यो दिनपतिः महाप्रभुस्तस्य प्राक्प्रतीहारपालः पूर्वद्वारपालोऽरुणो वस्त्रायताम् । कीदृशः । रथस्य पृष्ठोऽग्रेसरः । किं कुर्वन् । पूर्वं क्षितिभृदधिपतीन् पर्वतश्रेष्ठान् नृपश्रेष्ठांश्च दर्शयन् । किं कृत्वा सप्त अश्वान् नियमवशमाज्ञावशं नीत्वा प्राप्य । का इव । कक्ष्या इव । कक्ष्या राजमन्दिरद्वारभूमौ दौवारिकाणामवस्थानदेशास्ता इव । सार्वभौमस्य मन्दिरे सप्तकक्ष्या भवन्ति । ता दौवारिकेषु मुख्यस्य वशे भवन्ति । कीदृशः । प्रतीहारपालः । वेत्रेति । वेत्रकल्पो वेत्रतुल्यः प्रतोदः प्राजनं यस्य स

तथा । द्वारपालो हि वेत्रहस्तो भवति इति । कस्मिन्सति ध्वान्तस्य राशौ इतरजने पामरजने इव समुत्सारिते वेत्रप्रहारैरपसारिते तूर्णं दूरभाजि सति । अयमर्थः- महाप्रभुर्यदा रथमारुह्याऽऽस्थाने समायाति तदा तत्सेवार्थं सामन्ता राजानः इतरेपि कौतुकिनो जना एकीभूय तिष्ठन्ति तत्समये दौवारिकैरपसारणा क्रियते । इतरजने दूरमुत्सारिते दौवारिकमुख्यः क्षितिपतीन्प्रत्येकं नामग्राहं महाप्रभुं दर्शयतीति । तदत्रोक्तम् । "कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने" इत्यमरः। " इतरस्त्वन्यनीचयोः " इति च । " पुरोगाग्रेसरप्रष्ठाग्रतःसरपुरस्सराः" इति । भूभृद् भूमिधरे नृपे" इति । " आस्थनीक्लीबमास्थानं स्त्रीनपुंसकयोः सदः " इति । "द्वारि द्वास्थे प्रतीहारः" इति च ॥ ५७ ॥

अथाष्टपञ्चाशं पद्यम् ।

**वज्रिञ्जातं विकासीक्षणकमलवनं भासि नो भासि वह्ने**
**तातं नत्वाश्वपार्श्वान्नय यम माहषं राक्षसा वीक्षितास्थ ।**
**सप्तीन् सिञ्च प्रचेतः पवन भज जवं वित्तपावेदितस्त्वं**
**वन्दे सर्वेति जल्पन्प्रतिदिशमधिपान्पातु पूष्णोग्रणीर्वः ॥५८॥**

पूष्णोग्रणीरग्रेसरोऽरुणो वः पातु रक्षतु । किं कुर्वन् । प्रतिदिशं दिशं दिशं प्रति तत्तद्दिक्समीपगमने अधिपान् श्रीसूर्योपस्थानाय सावधानीकर्त्तुमिति जल्पन् । तदेवाह-वज्रिन्निति । हेवज्रिन् तव ईक्षणकमलवनं विकासि जातं नो वेति काकुः। प्रभोरुदयेऽन्येषामीक्षणानां कमलवनानां च विकासो जातस्तवेक्षणकमलवनं विकासि जातं न वा । प्रभुर्निकटे समागतोऽस्त्यतोऽवहितो भवेत्यभिप्रायः । वह्निं प्रत्याह-वह्ने त्वं भासि प्रकाशसे नो भासि वेत्यत्रापि काकुः । मन्दप्रभो दृश्यसे प्रबुद्धोऽसि न वा शीघ्रमायाहीत्यर्थः । अत्र कुत्रचिन्नाभासीति सप्तम्यन्तं कृत्वा भासि दीप्तौ न भासि न प्रकाशसे इति लिखितम् [1]तत्तुच्छत्वादुपेक्षितम् । यमं प्रत्याह । तातमिति । यम वैवस्वत ? तातं विवस्वन्तं नत्वा अश्वपार्श्वान्महिषं निजवाहनं नय

१ नाभासि इतिक्वचित्पठ्यते तत्रइत्थंव्याख्यातम् । आसमन्ताद्भासनमाभासः सविद्यते यस्य, इति विग्रहेइनि सम्बुद्ध्यन्तवह्नेर्विशेषणं तथा च स्वामिन्यागतेपूर्ववन्न प्रकाशसे इत्यर्थः । अथवा आभासि इति सप्तम्यन्तम् आसमन्ताद्भासि सूर्यस्य दीप्तौ प्रसृतायामितिशेषः । न भासि न शोभसे इत्यर्थः ।

अपनय । महिषेण सह शाश्वतिकविरोधादतिप्रौढा एते महिषं दृष्ट्वा योद्धुमुद्यताः । महिषस्य गमने विलम्बादित्यर्थः । शाश्वतिकविरोधेपि यद्यपि अहिनकुलयोर्नकुलस्येव अश्वमहिषमध्ये महिषस्यैव प्राबल्यमनुभवसिद्धं तथापि श्रीसूर्यस्याऽश्वानामतिप्रौढत्वादेवं व्याख्यातम् । अग्रे गत्वऽह-हे राक्षसा नैऋता वीक्षिताः प्रणमन्तो यूयं प्रभुणा कृपादृष्ट्या वीक्षितास्थ । शीघ्रं गत्वा निजकार्यं कुरुतेत्यर्थः । वरुणं प्रत्याह । हे प्रचेतः । सप्तीन्मार्गश्रान्तान् शीतेन जलेन सिञ्च । वायुं प्रत्याह—हे पवन त्वं जवं वेगं भज शीघ्रमायाहि । गमनविलम्बे सति शीघ्रगामिनं रथं त्वमपि प्राप्तुं न शक्ष्यसीत्यर्थः । कुबेरं प्रत्याह—हे वित्तप धनद त्वमावेदितः प्रभवे मया निवेदितोऽसि । अग्रे अर्घसम्भारमादाय श्रीसूर्योपस्थानाय पूर्वमेव सज्जीभूयात्रस्थितं रुद्रं स्वयं प्रणमति हेशर्व त्वामहं वन्दे इति । अत्रापि महाप्रभुरिति रीतिर्वर्णिता ॥ ५८ ॥

अथैकोनषष्ट्यं पद्यम्—

**पाशानाशान्तपालादरुण वरुणतो मा ग्रहीः प्रग्रहार्थं**
**तृष्णां कृष्णस्य चक्रे जहिहि नहि रथो याति मे नैकचक्रः ।**
**योक्तुं युग्यं किमुच्चैः श्रवसमभिलषस्यष्टमं वृत्रशत्रो–**
**स्त्यक्तान्यापेक्षविश्वोपकृतिरिति रविः शास्ति यं सोऽवताद्वः ।५९**

रविर्यमिति शास्ति शिक्षयति सोऽरुणो वः युष्मानवतात् । इति किम् । हेअरुण आशान्तपालाद् दिक्पालाद्वरुणात्पाशान् तत्प्रहरणरूपान् त्वं प्रग्रहार्थं हयरश्म्यर्थं माग्रहीः मागृहाण । सर्परूपप्रग्रहेष्वपरितुष्टो वरुणपाशान्बलादाच्छिद्य माग्रहीरित्यर्थः । रथस्य द्वीतीयचक्रकरणाय कृष्णचक्रं गृहीतुमिच्छन्तं प्रत्याह । तृष्णामिति । कृष्णस्य चक्रे तृष्णामभिलाषं जहिहि त्यज । मे मम रथ एकचक्रो याति नहि किमिति काकूक्तिः[1] । सप्तमेन सह युगेऽष्टमं योजयितुमुच्चैःश्रवसं किमभिलषसि किमर्थमभिलषसीत्यर्थः । कीदृशो रविः त्यक्तेति । त्यक्ता अन्यापेक्षा यस्यामेवं भूता विश्वोपकृतिर्विश्वोपकारो यस्य सः । अन्यानपेक्षविश्वोपकारक इत्यर्थः ॥ ५९ ॥

---

१ अत्र नकारद्वयवशान्नयाति इति न, अपि तु याति इत्यर्थः

अथ षष्टितमं पद्यम्—

**नो मूर्च्छा छिन्नवाञ्छः श्रमविवशवपुर्नैव नाप्यास्यशोषी**
**पान्थः पथ्येतराणि क्षपयतु भवतां भास्वतोग्रेसरः सः।**
**यः संश्रित्य त्रिलोकीमटति पटुतरैस्ताप्यमानो मयूखै-।**
**रारादारामलेखामिव हरितमणिश्यामलामश्वपङ्क्तिम् ॥६०॥**

स भास्वतोग्रेसरः पान्थोऽरुणो वः पथ्येतराण्यपथ्यान्यहितानि क्षपयतु। स कः। यः पटुतरैस्तीक्ष्णतरैरर्कस्य मयूखैस्ताप्यमानः सन् आरात्समीपे आरामलेखामिव हरितमणिश्यामलामश्वपङ्क्तिं संश्रित्य त्रिलोकीमटति। कीदृशः पान्थः। मूर्च्छाछिन्नवाञ्छः मूर्च्छया श्रमजनितमोहेन छिन्ना वाञ्छा मनोरथो यस्येदृशो नो न। तथा श्रमेण शिथिलवपुर्नैव। पुनरास्यशोषी पिपासाधिक्यान्मुखशोषवानपि न। अयमर्थः। यः पथिको घर्मनिवारणाय शिरसि हरितवृक्षपर्णानि बध्वा छत्रं वा धृत्वा मध्ये मध्ये वृक्षाणां छायायाम् आरामेषु च विश्राम्य गच्छति स मूर्च्छाश्रमशैथिल्यमुखशोषरहितो भवति। सर्वदा सुखेन चलतीति लोकस्थितिः। सात्रनिरूपिता। "आराद्दूरसमीपयोः" इत्यमरः॥ ६०॥

अथैकषष्टितमं पद्यम्।

**सीदन्तोन्तर्निमज्जज्जडखुरमुसलाः सैकते नाकनद्याः**
**स्कन्दन्तः कन्दरालीः कनकशिखरिणो मेखलासु स्खलन्तः।**
**दूरं दूर्वास्थलोत्कामा मरकतदृषदि स्थास्नवो यन्नयाताः**
**पूष्णोऽश्वाः पूरयंस्तैस्तदवतु जवनैर्हुंकृतेनाग्रणीर्वः ॥६१॥**

पूष्णोऽग्रणीररुणो वो युष्मानवतु। किं कुर्वन्। अश्वाः यत्स्थलं न याताः गतिमान्द्यान्नातिक्रान्तवन्तः हुं कृतेन प्रेरणार्थं कृतेन हुंकारेण हेतुना जवनैर्जवाधिकैस्तैरश्वैस्तत्स्थलं पूरयन्पूर्णं कारयन्। गतिमान्द्ये हेतुत्वेन विशेषणान्याह—सीदन्त इत्यादि। कीदृशा अश्वाः। नाकनद्याः स्वर्णद्याः सैकते सिकतामयस्थले अन्तर्निमज्जन्ति जडाः स्तब्धाः खुरा एव मुसलानि येषां ते तथा। अत एव सीदन्तः। खुरन्यासैः खेदं प्राप्नुवन्तः। तच्चरणानां कार्कश्येन खुराणां मुसलसाम्यम्। पुनः कीदृशाः। कनकशिखरिणो मेरोः कन्दरालीः कन्दरापङ्क्तिः स्कन्दन्त उल्लङ्घ्य गच्छन्तः। मध्ये मार्गमतिगभीराः कन्दरा वीक्ष्य तत्तटे क्षणं किञ्चिचकितत्वेन स्थित्वा उत्प्लुत्य गच्छन्तः। यद्वा स्कन्दिरगतिशोषणयोरित्यस्य

सामान्यार्थमादाय कन्दरालीरतिविशाला अतिगम्भिराश्च कन्दरापङ्क्तीः स्कन्दतो गच्छन्तः । तटेनाधोवतीर्य पुनः परतटमारुह्य गच्छन्ति इति व्याख्येयम् । यथा-कथञ्चिद्गतिविलम्बो विवक्षितः । पुनः कीदृशाः । मेखलासु मध्यभूमिषु कनकशिलोन्नतानतासु स्खलन्तः । पुनः कीदृशाः । दूरमिति । बुभुक्षावशाद्दूरमधिकं यथास्यादेवं दूर्वास्थले चरणार्थमुत्का उत्सुकाः । अत एव मरकतदृषदि विशालायां हरिन्मणिशिलायां कान्तिपूरे दूर्वाभ्रमात्स्थास्नवः स्थिरतराः । अयमर्थः । "योजनानां सहस्रे द्वे द्वे शते द्वे च योजने । एकेन निमेषार्द्धेन क्रममाण नमोस्तुते"। इतिपुराणवाक्यात्षष्टिघटिकाभिर्द्वादशराश्यवच्छिन्नं भुवनमण्डलं परिभ्रमन्सूर्यो नेत्रानुमानेन गच्छति । तत्र निमेषार्द्धगतिमान्द्ये एतावत्स्थलं गन्तव्यं तिष्ठति तत्पूरणायारुणो हुंकारैः सूर्याश्वान्त्वरयतीति। "स्थास्नुः स्थिरतरस्थेयान्" इत्यमरः। ग्लाजिस्थश्चग्स्नुरिति ग्स्नुप्रत्ययः । जवनैरिति । जुरिति सौत्रधातोः कर्तरि जुचङ्क्रमेत्यादिना युचि योरनादेशे रूपम् । "तरस्वी त्वरितो वेगी प्रजवी जवनो जवः" इत्यमरः॥ ६१ ॥ इत्यरुणवर्णनम् ।

अथ द्विषष्टितमं पद्यम्—

**पीनोरःप्रेरिताभ्रैश्चरमखुरपुटाग्रस्थितैः प्रातरद्रा-**
**वादीर्घाङ्गैरुदस्तो हरिभिरपगतासङ्गनिःशब्दचक्रः ।**
**उत्तानानूरुमूर्द्धावनतिहठभवद्विप्रतीपप्रणामः**
**प्राह्णे श्रेयो विधत्तां सवितुरवतरन् व्योमवीथीं रथो वः ॥६२॥**

अथैकादशभिः पद्यै रथवर्णनम् ।

सवितुः रथो वः श्रेयो विधत्ताम् । किं कुर्वन् । प्राह्णे पूर्वसंध्यायां व्योमवीथीमाकाशमार्गमुदयतटादवतरन् प्राप्नुवन् । तॄधातोरत्र गमनमर्थः । उपसर्गेण स एव द्योत्यते । अवगतिमित्यादौ गमेर्ज्ञानार्थ इव । किञ्च, अन्यत्र अवपूर्वस्य तरतेः प्राप्त्यर्थदर्शनात् । सोपानैरवतरतीत्यादौ तु नीचैर्गमनमर्थो धातूनामनेकार्थत्वात् । अथ प्रकृतमनुसरामः । कीदृशो रथः। प्रातर्हरिभिरश्वैरुदस्तः उत्क्षिप्तः व्योममार्गे कीदृशैर्हरिभिः । पीनोर इति । पीनं पुष्टं यदुरो वक्षस्थलं तेन प्रेरितान्यपसारितानि मार्गविरोधीन्यभ्राणि मेघा यैस्ते तथा तैः । पुनरद्रावुदयपर्वते चरमखुरपुटाग्राणि पश्चात्पादशफपुटप्रान्तानि तैः स्थितैः । पुनरादीर्घाणि आसमन्तादीर्घाणि अङ्गानि येषां तैः । उपर्यारोहणे अश्वानां तथा जातिस्वभावाऽयम् ।

कीदृशो रथः । अपगत इति । अपगतो निवृत्तो य आसङ्गो वस्त्वन्तरसंसर्गस्तेन निःशब्दं शब्दरहितश्चक्रं यस्य स तथा। पुनः कीदृशो रथः । उत्तान इति । उत्तान उन्नतो योऽनूरुररुणः तस्य मूर्द्धा तस्य अवनतिर्निम्रता तथा हठाद्बलाद्भवन् विप्रतीपः प्रतिकूलो निवृत्त्य पृष्ठभागे कृतप्रणामो यस्मिन्सः । अयमर्थः—महाप्रभुर्यदा विजययात्रार्थं रथमारोहति तदा सारथिस्तदग्र उपविश्य परिवृत्य तं नत्वा दृष्टिसंज्ञया तदनुज्ञातोऽश्वान्प्रेरयति इति । प्रकृते तु सूर्यस्य रथ उदयपर्वतात्प्रातराकाशमार्गमारोहति इति। तत्समयेऽरुणः प्रथममाकाशे तिष्ठति, सूर्यस्तु ततो नीचैर्भागे तिष्ठतीति हठेन यथा कथञ्चिन्निवृत्याऽरुणेन प्रणामः क्रियत इति । "पीनपीन्वी तु स्थूलपीवरे" इत्यमरः ॥ ६२ ॥

अथ त्रिषष्टितमं पद्यम्—

**उत्कीर्णस्वर्णरेणुर्द्रुतखुरदलिता पार्श्वयोः शश्वदश्वै-**
**रश्रान्तभ्रान्तचक्रक्रमनिखिलमिलन्नेमिनिम्ना भरेण ।**
**मेरोर्मूर्द्धन्यघं वो विघटयतु रवेरेकवीथी रथस्य—**
**स्वोष्मोदक्ताम्बुरिक्तप्रकटितपुलिनोद्धूसरा स्वर्द्धुनीव॥६३॥**

मेरोर्मूर्द्धनि रवेः रथस्य एकवीथी एकचक्रभ्रमणकृतामार्गरेखा वो युष्माकमघं विघटयतु खण्डयतु । कीदृशी वीथी । उत्कीर्णोऽवकीर्णः स्वर्णरेणुर्यस्यां सा तथा । पुनः अश्वैः सश्वन्निरन्तरं पार्श्वयोः द्रुतखुरैर्दलिता अश्वानामुभयपार्श्ववर्तित्वात् । पुनः कीदृशी । अश्रान्त इति । मध्ये इति शेषः । भरेण रथभारेण अश्रान्तमविरतं भ्रान्तं चलितं यच्चक्रं तस्य क्रमः क्रमणं तेन निखिला मिलन्ती अन्तर्निमग्नाया नेमिश्चक्रान्तस्तेन निम्ना गम्भिरा । अत्रोत्प्रेक्षते । केव । स्वर्धुनीइव । मेरुमूर्द्धनि प्रवहन्ती गङ्गेव । कीदृशी स्वर्द्धुनी । गङ्गायाः स्वतः श्वैत्याद्धूसरवीथ्युत्प्रेक्षाया असंभवेन धूसरत्वहेतुं विशेषणेनाह । स्वोष्मेति । स्वशब्देन रविसम्बन्धो विवक्षितः स्वः स्वकीयो रविसम्बन्धी य उष्मा तेन उदक्तमुद्धृतं यदम्बु तेन रिक्तमत एव प्रकटितं पुलिनं तोयोत्थितस्थलं तेनोद्धूसरा । शोष्मोद्रिक्तेति पाठे शोष्मणा उद्रिक्ताम्बु रिक्तमतएव प्रकटितं यत्पुलिनं तेनोद्धूसरा । शोष्मणेत्यस्योद्रिक्तशब्देनान्वयः । उद्रिक्तं प्रवृद्धम् । अयमर्थः । मेरोर्मूर्द्धनि कनकभूमौ

सूर्यरथस्य विशाला वीथी वर्त्तते । तत्रैव स्थलान्तरे गङ्गा प्रवहति । सूर्यरथवीथी सप्ताश्वपरिभ्रमणजाता अतिविशाला एव चक्रगत्या रथभारेण मध्यभागे अतिनिम्ना पार्श्वयोस्तु लाघवेन गच्छद्भिरश्वैः किञ्चित्क्षुण्णत्वेनेषन्निम्ना । एवं सति सूर्यातपशोषितजलोद्भूततटयुक्तगङ्गात्वेनोत्प्रेक्ष्यते । मूर्द्धनीति । विभाषाङिश्योरित्यरल्लोपस्य वैकल्पिकत्वात्तदभावे रूपम् । उदक्तमिति । उत्पूर्वकस्य अञ्चतेर्द्धातोः कर्मणि क्तप्रत्यये अञ्चोऽनपादान इत्यनपादानेत्यस्य विहितत्वात्तदभावेरूपम् ।अयं श्लोकः त्रिभुवनपालप्रणीतटीकायुक्तसूर्यशतके अष्टषष्टितमो विद्यते ॥६३॥ अथचतुःषष्टितमं पद्यम्—

ध्वान्तौघध्वंसदीक्षाविधिगुरु वहता प्राक् सहस्रं कराणा—
मर्यम्णा यो गरिम्णः पदमतुलमुपानीयताध्यासनेन ।
स श्रान्तानां नितान्तं भरमिव मरुतामक्षमाणांविसोढुं
स्कन्धात्स्कन्धं व्रजन्वो वृजिनविजितये भास्वतः स्पन्दनोऽस्तु॥६४॥

स भास्वतः स्पन्दनः वो युष्माकं वृजिनविजितये पापनाशायास्तु । स कः । योऽर्यम्णा अध्यासनेनाधिष्ठानेन प्राक् गरिम्णो गुरुतायाः अतुलं परं स्थानमुपानीयत प्रापितः । कीदृशेनार्यम्णा कराणां सहस्रं वहता धारयता । कीदृशं सहस्रं ध्वान्तेति । ध्वान्तौघध्वंसस्य यो दीक्षाविधिस्तत्रगुरु* । किं कुर्वन् । मरुतां प्रवहादिवायूनां स्कन्धात् स्कन्धं व्रजन् उपर्य्युपरि गच्छन् । कीदृशानां मरुताम् । भरं भारं विसोढुमक्षमाणाम् अतएव श्रान्तानामिव । अत्रेदं तात्पर्यम् । आकाशे उपर्य्युपरि प्रवहादिवातानां सञ्चारप्रदेशाः स्कन्ध इति पुराणेषु प्रसिद्धाः । सूर्यरथ आकाशे ताननुक्रमेणोल्लंघ्योच्चैर्गच्छति । तदेतद्वचोभङ्ग्या कविना वर्ण्यते । यथा सहस्रसङ्ख्यकरेषु दीक्षाविधिसम्बन्धेन श्लेषाद्गुरुत्वमारोप्य तादृशकरसहस्रयुक्तस्य स्वतश्चातिगुरोः श्रीसूर्यस्याधिष्ठानेन रथश्लेषेण गरिमा समारोपितः । एवं स्कन्धेऽपि श्लेषेणार्थान्तरमारोप्य लोकरीतिरुदीरिता । यो मार्गे गच्छन् कस्यचित्स्कन्धमारुह्य गच्छति स स्वभाराधिक्यात्तस्य श्रममालोक्याऽन्यस्य स्कन्धमारुह्य ततोप्यन्यस्य स्कन्धमारुह्यैवङ्क्रमेणाभिलषितं देशं गच्छतीति । अत्राश्वले सकारानुप्रासः । विसोढुमित्यत्र परिनिविभ्य इति प्राप्तं षत्वं सोढ इति सूत्रेणनिषिद्धम् ॥ ६४ ॥

* पटु इत्यपि पाठः

अथ पञ्चषष्टितमं पद्यम्—

योक्त्रीभूतान्युगस्य ग्रसितुमिव पुरो दन्दशूकान्दधानो
द्वेधाव्यस्ताम्बुवाहावलिविहितबृहत्पक्षविक्षेपशोभाम् ।
सावित्रःस्यन्दनोऽसौ निरतिशयरयप्रीणितानूरुरेनः
क्षेपीयो वो गरुत्मानिव हरतु हरीच्छाविधेयप्रचारः ॥६५॥

असौ सावित्रः सवितृसम्बन्धी स्यन्दनो वो युष्माकमेनः क्षेपीयः क्षिप्रतरं यथा भवत्येवं हरतु । क इव । गरुत्मानिव । विशेषणैः स्यन्दनस्य गरुडसाम्यमाह । योक्त्रीभूतानिति । युगस्य प्रासङ्गस्य योक्त्रीभूतान् युग्यबन्धभूतान्दन्दशूकान्सर्पान् ग्रसितुं भक्षयितुमिव पुरोऽग्रे दधानः । पुनः द्वेधा व्यस्ता उभयतो विक्षिप्ता या अम्बुवाहावलिस्तया विहिता कृता बृहन्तौ विस्तीर्णौ यौ पक्षौ तयोर्विक्षेपः चालनं तेन शोभा यस्य स तथा । पुनः कीदृशः । निरतिशयो यो रयस्तेन प्रीणितस्तोषितोऽनूरुररुणो येन । रथपक्षे अस्य शीघ्रगमने सारथेः सन्तोषो भवति । गरुडपक्षे कनिष्ठ आतृत्वान्निजपराक्रमेण ज्येष्ठमरुणं तोषितवानित्यर्थः । पुनः कीदृशः । हरीति।हरीणामश्वानां या इच्छा मान्द्ये शैघ्र्ये वा तद्विधेयस्तदधीनः प्रचारः सञ्चारो यस्य स तथा । गरुडस्तु हरेर्विष्णोर्या इच्छा तदधीनः प्रचारस्तद्वाहनत्वात् । "आबन्धो योत्रं योक्त्रम्" इत्यमरः । क्षेपीय इत्यतिशयेन क्षिप्रमित्यर्थे ईयसुनि स्थूलदूरेति यणादिपरलोपे पूर्वस्य गुणे च रूपम् ॥ ६५ ॥

अथ पञ्चषष्टितमं पद्यम्—

धूर्ध्वस्ताग्र्यग्रहाणि ध्वजपटपवनान्दोलितेन्दूनि दूरम्
राहौ ग्रासाभिलाषादनुसरति मुहुर्दत्तचक्रव्यथानि ।
श्रान्ताश्वश्वासहेलाधुतविबुधधुनीनिर्झराम्भांसि भद्रम्
देयासुर्वो दवीयो दिवि दिवसपतेः स्पन्दनप्रस्थितानि ॥६६॥

दिवसपतेः सूर्यस्य दिवि आकाशे दवीयः अतिदूरं यथाभवत्येवं स्यन्दनप्रस्थितानि रथगमनानि वो भद्रं देयासुः । निकटगमने गृहादिसङ्घटनेन गमनविलम्बादिति भावः। तदेवाह । धूरिति । कीदृशानि स्यन्दनप्रस्थितानि धुरा ध्वस्ता विक्षिप्ता अग्र्याः श्रेष्ठा ग्रहा गुरुशुक्रादयो यैस्तानि तथा । पुनः ध्वजपटपवनेनाऽ-

न्दोलितश्चालित इन्दुर्यैस्तानि तथा । पुनर्ग्रासाभिलाषात्सूर्यग्रासवाञ्छातो मुहुरनुसरति राहौ दूरमतिशयेन दत्ता चक्रव्यथा विष्णुचक्रदर्शनजन्या पीडा यैः तानि। एतच्चक्रदर्शनेन ग्रासार्थमागच्छन्राहुर्विष्णुचक्रत्रासान्निवर्तत इत्यर्थः । पुनः कीदृशानि । श्रान्तेति । श्रान्ता येऽश्वास्तेषां ये श्वासास्तैर्हेलया लीलया विधुतानि विबुधधुन्योदेवनद्योः निर्झराम्भांसि वारिप्रवाहजलानि यैस्ते तथा । "धूः स्त्रीक्लीबे यानमुखम्" इत्यमरः । दवीय इत्यतिशयेन दूरमित्यर्थे ईयसुनि स्थूलदूरेति यणादिपरलोपे पूर्वस्य गुणे अवादेशे च रूपम् ॥ ६६ ॥

अथ सप्तषष्टितमं पद्यम्—

अक्षे रक्षां निबध्य प्रतिसरवलयैर्योजयन्त्यो युगाग्रम्
धूस्तम्भे दग्धधूपाः प्रहितसुमनसो गोचरे कूबरस्य ।
चर्चाश्चक्रे ददत्यो मलयजपयसा सिद्धवध्वस्त्रिसन्ध्यम्
वन्दन्ते यं द्युमार्गे स दहतु दुरितान्यंशुमत्स्यन्दनो वः ॥६७॥

सः अंशुमत्स्यन्दनो वो दुरितानि दहतु । स कः । सिद्धवध्वो द्युमार्गे आकाशमार्गे त्रिसन्ध्यं यं वन्दन्ते नमस्यन्ति । कीदृश्यः सिद्धवध्वः । अक्ष इति। अक्षे चक्रकीले रक्षां हरिद्रासिद्धार्थकादिमङ्गलद्रव्यं निबध्य प्रतिसरवलयैः प्रतिसररूपैः मङ्गलकङ्कणैः युगाग्रं योजयन्त्यः । पुनः कीदृश्यः । धूःस्तम्भे धुरो यानमुखस्याश्रयस्तम्भे दग्धधूपा दीपितधूपाः पूजार्थम् । दग्धधूपा इत्यत्र दिग्धधूपा इति पाठ्यम्, अश्लीलपदप्रयोगदोषनिवारणाय । दिग्धो निदिग्ध उपचितो धूपो याभिस्ताः। दिग्धशब्दोऽपि ।वषाक्ते शक्तः। अतएव आलङ्कारिकैर्दिग्धोऽमृतेन च विषेण च यक्ष्म लाक्ष्यागाढं निखात इव मे हृदये कटाक्ष इति भवभूतिप्रयोगः पुनरुक्तत्वेन दूषितः । तथापि प्रसिद्धपाठाद्वैलक्षण्येन दिहेरुपचयोर्थ आश्रणीयः । पुनः कूबरस्य युगन्धरस्य गोचरे प्रदेशे प्रहिताः सुमनसः पुष्पाणि याभिस्तास्तथा । पुनः मलयजपयसा चन्दनजलेन चक्रे चर्चाश्चर्चनं विलेपनं ददत्यः "हस्तसूत्रे प्रतिसरोऽस्त्रियाम्" इत्यमरः । "कूबरस्तु युगन्धरे" इत्यपि "चर्चा तु चार्चिक्यं स्थासक" इति ॥ ६७ ॥

अथाष्टषष्टितमं पद्यम्—

नन्तुं नाकालयानामनिशमुपयतां पद्धतिः पङ्क्तिरेव
क्षोदो नक्षत्रराशेरकृशरयचलच्चक्रपिष्टस्य धूलिः ।
ह्रेषाह्लादो हरीणां सुरशिखरिदरीः पूरयन्नेमिनादो
यस्याव्यात्तीव्रभानोः स दिवि भुवि यथा व्यक्तचिह्नो रथो वः ६८

तीव्रभानोरुष्णरश्मेः स रथो वो युष्मान् अव्यात् । कीदृशः दिवि आकाशे भुवि च यथा व्यक्तचिह्नः यथायोग्यमभिव्यक्तानि चिह्नानि यस्य स तथा । स कः । यस्य चिह्नमिति शेषः । दिवि नन्तुमुपयतां समीपमागच्छतां नाकालयानां दिवौकसां पङ्क्तिरेव सैव रथगमनस्य द्योतिकेत्यर्थः । भुवि पद्धतिर्मार्गरेखा, पुनर्दिवि नक्षत्रराशेर्मार्गान्तर्वर्तिनो रथाश्वैः क्षोदः संचूर्णनं विक्षेप इति यावत् । भुवि अकृशं स्थूलं रयेण चलच्चक्रं तेन पिष्टं चूर्णितं यत्स्थलं तस्य धूलिः । पुनर्दिवि हरीणां ह्रेषाह्लादो ह्रेषाध्वनिः । भुवि तु सुरशिखरिदरीः सुमेरुकन्दराः पूरयन् नेमिनादः । यस्य चिह्नमित्यस्य सर्वत्रान्वयः । पद्धतिः पङ्क्तिरित्यत्र क्रमो न विवक्षितः । छन्दोनुरोधेन तथोक्तम् । "सरणिः पद्धतिः पद्या" इत्यमरः । " वीथ्यालिरावलिः पङ्क्तिः " इत्यपि । " चूर्णे क्षोदः " इति च ॥ ६८ ॥

अथैकोनसप्ततितमं पद्यम्—

एकाह्नैव दीर्घां त्रिभुवनपदवीं लङ्घयन्यो लघिष्ठः
पृष्ठे मेरोर्गरीयान् दलितमणिदृषत्त्विषि पिंषञ्छिरांसि ।
यः सर्वस्योपरिष्टादथ च पुनरधस्तादिवास्ताद्रिमूर्ध्नि
ब्रध्नस्याव्यात्स एवं दुरधिगमपरिस्यंदनः स्यंदनो वः ॥६९॥

ब्रध्नस्य सः स्यदनो वोऽव्यात् । कीदृशः । एवं पूर्वोक्तप्रकारेण दुरधिगमं दुर्ज्ञेयं परिस्यन्दनं गमनं यस्य स तथा । स कः । य एकाह्नैव दीर्घां त्रिभुवनपदवीं लङ्घयन् । यतो लघिष्ठः । अतिलघुः । पुनः । गरीयान् अतिगुरुः । अत एव मेरोः पृष्ठे शिरांसि शिखराणि पिंषन् चूर्णयन् । कीदृशानि शिरांसि । दलिता मणय एव दृषदस्ताभिस्त्विषो येषु तानि । पुनर्यः, सर्वस्य

उपरिष्टात् उपरि भवति । पुनरधस्तादद्रिमूर्ध्नि अधस्तादिव नीचैरिवेति । यो लघिष्ठः स गरीयान् कथं भवति ? यः सर्वस्यो परिष्टात् । स अधस्तात्कथमित्यसम्भवाद्दुरधिगमगतिः वस्तुतस्त्वयं रथो लघिष्ठः । क्षिप्रगामी गरीयान्गुरुतरः पूज्यः । पुनः, सर्वस्योपरिष्टात् । उपरि सर्वोत्कृष्टेन वर्त्तमानः अधस्तादिव लोकदृष्ट्या । एकाहेनेत्यत्र एकं च तदहश्चेति कर्मधारये राजाहसखिभ्यष्टजिति टचि रूपम् ॥ ६९ ॥

अथ सप्ततितमं पद्यम्—

निस्पन्दानां विमानावलिविततदिवां देववृन्दारकाणां
वृन्दैरानन्दसान्द्रोद्यममपि वहतां विन्दतां वन्दितुं नो ।
मन्दाकिन्याममन्दः पुलिनभृतिमृदुर्मन्दिरे मन्दुराभे
नन्दारैर्मण्डितारं दधदरि दिनकृत्स्यन्दनः स्तान्मुदे वः ॥७०॥

दिनकृत्स्यन्दनः सूर्यरथो वो मुदे स्तात् । कीदृशः स्यन्दनः । अरिअराः विद्यन्तेस्मिन्नित्यारि चक्रं तद्वत् । कीदृशमरि । देववृन्दारकाणां देवमुख्यानां वृन्दैर्मन्दारैः पारिजातपुष्पैः पूजया मण्डिता अलङ्कृता अराश्चक्रान्तर्वर्ति दारुभेदा यस्य तत्तथा । कीदृशानां देवनिस्पन्दानां पूजार्थमागत्य निश्चलत्वेनैकाग्रीभूय स्थितानाम् । पुनर्विमानावलिभिर्विततच्छदिता द्यौराकाशो यैस्ते । तथा तेषाम् । पुनरानन्दसान्द्रोद्यममानन्देन सान्द्रो य उद्यमस्तं वहताम् । पुनर्वन्दितुं नमस्कर्तुं अपि नो विन्दतां न लभमानानाम् । अवसरमिति शेषः । एकस्याग्रे एक एकस्याग्रे एक एवं त्वरया सम्मर्दे रथस्य शीघ्रगामितया एकस्यापि नमस्कारसमयलाभो नास्तीत्यर्थः । कीदृशः स्पन्दनः । मन्दाकिन्याममन्दः शीघ्रः । कीदृश्याम् । पुलिनभृति पुलिनं तोयोत्थितं तटं तद्बिभर्तीति तथा तस्याम् । तोयोत्थितसैकस्यार्द्रत्वेन घनीभूतत्वात्तत्राश्वखुराणाममग्नत्वेन तृषितानामश्वानां शीघ्रगमनादित्यर्थः । पुनः कीदृशः । मन्दरे पर्वते मृदुमन्दगमनः । कीदृशे मन्दरे मन्दुराभे मन्दुरा वाजिशाला तत्तुल्ये । मध्ये मार्गे पार्श्वतो मन्दरपर्वतं निबिडच्छायवृक्षगम्भीरदरीयुक्तत्वेन मन्दुराभं दृष्ट्वा श्रान्ता अश्वाः स्थातुमिच्छन्ति, अतस्तत्राश्वगतिमान्द्येन क्वचित् रथस्य मन्दगमनाद्यथाकथंचित्त्वरया आगत्य देवैः पुष्पाण्यवक्षिप्तानीति मण्डितारमित्युक्तम् । तृषिता अश्ववृषादयो मार्गे दूराज्जलं

दृष्ट्वा धावन्ति । श्रान्ताश्वमार्गे समीपे ग्रामं वृक्षच्छायां वा दृष्ट्वा स्थातुमिच्छन्तो मन्दं चलन्तीति जातिस्वभावः । क्वचिन्मन्दिराभ इति पाठः । तत्रापिकधृषेत्यादिना तुमन् ॥ ७० ॥

अथैकसप्ततितमं पद्यम्—

चक्री चक्रारपङ्क्तिं हरिरपि च हरीन्धूर्जटिर्धूर्ध्वजाग्रान्
पक्षं नक्षत्रनाथोऽरुणमपि वरुणः कूबराग्रं कूबेरः ।
रंहस्सङ्घः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य
स्तौति प्रीतिप्रसन्नोन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः॥७१॥

अहिमरुचेः सः स्यन्दनो वो युष्मानवतात् । स कः । यस्य चक्रस्य आरपङ्क्तिं चक्री विष्णुः अन्वहं स्तौति । कीदृशः प्रीतिप्रसन्नः । प्रीत्या हर्षेण प्रसन्नः सोत्साहः । इदं विशेषणं सर्वत्र योज्यम् । हरिरिन्द्रोऽपि हरीनश्वानस्तौति इत्यस्यापि सर्वत्रान्वयः । धूर्जटिः शिवो धूर्ध्वजाग्राणि । रथमुखध्वजानामग्राणि । तथा नक्षत्रनाथः । पक्षं रथकीलविशेषम् । वरुणोऽरुणं सारथिम् । कुबेरः कूबराग्रं युगन्धराग्रम् । सुराणामन्येषां सङ्घः समागमः समाज इत्यर्थः । यस्य रहो वेगं स्तौति । स्तुतौ हेतुमाह । कीदृशस्य यस्य । जगदिति । जगतामुपकृतये नित्यं निरन्तरं युक्तस्य । सङ्घसार्थौ तु जन्तुभिरिति तुसमुदाये जंतस्य शक्रत्वात् संगइति षंजसंगेत्यस्य धाता सिध्यति ॥७१॥

अथ द्विसप्ततितमं पद्यम् ।

नेत्राहीनेन मूले ऽविहितपरिकरः सिध्यसाध्यैर्मरुद्भिः
पादोपान्तेस्तुतोलं वलिहरिभसाकर्षणाबद्धवेगः ।
भ्राम्यन्व्योमाम्बुराशावशिशिरकिरणस्पन्दनः सन्ततं वो
दिश्याल्लक्ष्मीमतुल्यामतुलितमहिमे वा परौमंदराद्रिः ॥७२॥

अशिशिरकरस्पंदनो वः सन्ततमतुल्यामनुपमां लक्ष्मीं दिश्यात् । कइव । अपरोमन्दराद्रि रिव । सोऽपि निरूपमां लक्ष्मीं क्षीरसागरादुद्धृत्य श्रीनारायणाय दत्तवान् । विशेषणोभयोः साम्यमाह । नेत्रेति अहीनेनोत्कृष्टेन नेत्रा सारथिना अरुणेन मूलेमूलभागे विहितः स्थापितः परिकरः योक्रकीलरज्ज्वादिसम्भारो यस्य स तथा । सारथी रथे उपयुज्यमान्तेदधिकं संभारं दूरमार्गेगमने स्थापयतीति

लोकरीतिः । कीदृशो मन्दराद्रिः । नेत्रेति । नेत्रं मंथगुणस्तद्रूपेण अहीनेन अहीनांसर्पाणामिनेने प्रभुणावासुकिना मूले देवासुरैर्विहितः । परिकरो मन्थरज्जुरूपो यस्य स तथा । पुनः सिद्धसाध्यैर्मरुद्भिर्देवैः पादोपान्ते चक्रसमीपे अलमतिशयेन स्तुतः । मन्दरोऽपि सिद्धादिभिः स्वस्थानादायसमये पादोपान्ते यदा प्रत्यतपर्वतास्तेषां समीपे अलं स्तुतः पुनः । बलिनो ये हरयाश्वास्तेषां रभसाकर्षणेनाबद्धः स्वीकृतो वेगो येन स तथा । मन्दिराद्रिश्चबले दैत्यराजस्य हरेर्देवराजस्य च रभसेन सागरमथने आकर्षणादाबद्धवेगः । पुनः क्वादृक् व्योमाम्बुराशौ अपारत्वेनाम्बुराशितुल्ये व्योम्नि भ्राम्यन् । मन्दरोम्यम्बुराशौ भ्रान्तवान् । पुनः अतुलितमहिमा अनुपममाहात्म्यः । मन्दरोपि । ओविष्णुस्तेन-कूर्मरूपेण पृष्ठे धृत्वा अतुलितमहिमा अनुपममाहात्म्यः तुलितो महिमा गुरुत्वं यस्य स तथा । " नेत्रं मन्थगुणेवस्त्रे तरुमूले विलोचने " इति विश्वः । "इनः सूर्ये प्रभौ " इत्यमरः । " पादाः प्रत्यन्तपर्वताः इत्यपि । अम्बुराशिशब्दः समुद्रमात्रे रूढः क्षीरसमुद्रस्याविवक्षितत्वात् ॥ ७२ ॥ इति रथवर्णनम् ।

अथाष्टभिः पद्यैर्मण्डलं वर्णयति ।

अथ त्रिसप्ततितमं पद्यम्—

**यज्ज्यायो बीजमह्नामपहततिमिरं चक्षुषामञ्जनं यत्**
**यद्द्वारं मुक्तिभाजां यदखिलभुवनज्योतिषामेकमोकः ।**
**यद्वृष्ट्यम्भोनिदानं धरणिरससुधापानपात्रं महद्य-**
**द्दिश्यादीशस्य भासां तदविकलमलं मङ्गलं मण्डलं वः ॥७३॥**

भासामीशस्य तन्मण्डलं वो युष्माकमलमत्यर्थमविकमलमनश्वरं मङ्गलं-दिश्यात् । तत्किं यदह्नां ज्यायः श्रेष्ठमपरिणमद्बीजम् । पुनः, यच्चक्षुषां लोकनेत्राणां प्रतिहततिमिरमञ्जनं तिमिरदूरीकरणेनालोकशक्तिप्रदम् । अन्यदप्यञ्जनं नेत्राणां तिमिराख्यं रोगमपनीय दृष्टिसामर्थ्यं ददाति । पुनः, यन्मुक्तिभाजां द्वारं "द्वाविमौ-पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्च रणे चाभिमुखे हतः" इति पुराणवचनात् । पुनर्यदखिलभुवनेषु यानि ज्योतींषि तेषामेकमोकः स्थानम् । परब्रह्मतेजोरूपत्वादेतस्य । अन्येषां तेजसामित एवोद्भूतत्वात् । पुनर्यत् । वृष्ट्यम्भसो निदानं किरणैः सूर्य एव वर्षतीति पुराणप्रसिद्धेः । पुनर्यत् धरण्या

यो रसः सा एव सुधा अमृतं तस्याः पानपात्रं महद्विशालम् । अष्टसु मासेषु धरणिरसं पिबतीत्यर्थः ॥ ७३ ॥

अथ चतुःसप्ततितमं पद्यम्—

वेलावर्द्धिष्णु सिन्धोः पय इव खमिवार्द्धोद्गताग्र्यग्रहोडु
स्तोकोद्भिन्नस्वचिह्नप्रसवमिव मधोरास्यमस्यन्महांसि ।
प्रातः पूष्णोऽशुभानि प्रशमयतु शिरः शेखरीभूतमद्रेः
पौरस्त्यस्योद्गभस्तिस्तिमिततमतमःखण्डनं मण्डलं वः ॥७४॥

पूष्णो मण्डलं वः अशुभानि प्रशमयतु । कीदृशं, प्रातः पौरस्त्यस्य पुरोदिग्भवस्याद्रेरुदयस्य शिरः शेखरीभूतम् । पुनः उद्गभस्ति उद्गतकिरणम् । पुनः स्तिमिततममतिदृढं यत्तमस्तस्य खण्डनं । पुनः कीदृशं महांसि अन्यतेजांसि अस्यन् तिरस्कुर्वन् । पूर्वोदितकिञ्चित्प्रसृतकिरणतरणिमण्डले उपमां प्राह, वेलेत्यादि । वेलायां वृद्धिवेलायां मध्याह्ने अर्द्धरात्रे वा वर्द्धिष्णु अग्रे वर्द्धनशीलं प्राक् सिंधोः पय इव तरंगैरितस्ततः प्रसरदग्रे अतिवर्द्धिष्यमाणमनुमीयते। प्रचण्डं भविष्णु लक्ष्यते । पुनः खमिवेति । अर्द्धं किञ्चिदुद्गतानि अग्र्याः श्रेष्ठा ग्रहा उडूनि च यस्मिन्नीदृशं खमिव । तद्यथाग्रे समग्रोदिष्यत् ग्रहनक्षत्रं लक्ष्यते तद्वत् । पुनः मधोश्चैत्रमासस्य आस्यं मुखमिव । कीदृशमास्यं स्तोकमीषदुद्भिन्नः उद्गतः स्वचिह्नानां पल्लवानां पुष्पाणां प्रसव उद्भवो यस्मिन्तत्तथा । तद्यथा अग्रे प्रचुरपल्लवपुष्पसमृद्धिर्ज्ञायते तथेदमपि । "अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि" इत्यमरः । "स्याच्चैत्रे चैत्रिको मधुः" इति च। पौरस्त्यस्येति पुरोभव इत्यर्थे दक्षिणापश्चादितित्यकि सिद्धम् ॥ ७४ ॥

अथ पञ्चसप्ततितमं पद्यम्—

प्रस्युप्तस्तप्तहेमोज्ज्वलरुचिरचलः पद्मरागेण येन
ज्यायःकिञ्जल्कपुञ्जो यदलिकुलशितेरम्बरेन्दीवरस्य ।
कालव्यालस्य चिह्नं महिततममहो मूर्ध्नि रत्नं महद्य-
द्दीप्तांशोः प्रातरव्यात्तदविकलजगन्मण्डनं मण्डलं वः ॥७५॥

१ मनांसि इतिपाठभेदः तत्र जनानाम् इतिशेषं कृत्वा तेषां मनांसि अस्यन् अपहरन्नित्यर्थः

दीप्तांशोस्तन्मण्डलं वोऽव्यात् । कीदृशं प्रातःसमये अविकलं पूर्णं जगतो मण्डनमाभरणम् । तत्किम् येन मण्डलेन तप्तहेमोज्वलरुचिः प्रातःकालिक-किरणसम्बन्धात्सद्यस्तप्तसुवर्णकान्तिर्यस्य, तादृशः अचलः उदयपर्वतः पद्मरागेण मणिना प्रत्युप्तः खचित इव । लुप्तोत्प्रेक्षा । पुनर्यद् अलिकुलशितेर्भ्रमरसमूह-श्यामस्य अम्बररूपनीलकमलस्य ज्यायान् श्रेष्ठः । किञ्जल्कपुञ्जः केसरराशिः इव । ज्यायांश्चासौ किञ्जल्कपुञ्जश्चेति कर्मधारयः । इन्दीवरमलिकुलेन शितीभवति । शितिशब्दस्य भाषितपुंस्कत्वात्पक्षे न नुम् । पुनर्यन्महिततमं श्रेष्ठतमम् । अहो आश्चर्ये । कालव्यालस्य कालरूपसर्पस्य मूर्ध्नि चिह्नं चिह्नरूपं महद्रत्नम् । पद्मरागादिरूपेण प्रतिभासमानत्वेन त्रैलोक्यस्य लोकोत्तरं मण्डनमित्यर्थः । "स्यान्निकायः पुञ्जराशिः" इत्यमरः । पुञ्जमिति क्वचिन्नपुंसकपाठस्तु भ्रमाल्लिखितः केनचित् । "शिता धवलमेचकौ" इत्यमरः ॥ ७५ ॥

अथ षड्सप्ततितमं पद्यम्—

**कस्त्राता तारकाणां पतति तनुरवश्यायबिन्दुर्यथेन्दु-**
**र्विद्राणा दृक् स्मरारेरुरसि मुररिपोः कौस्तुभो नोद्गभस्तिः ।**
**वह्नेः साप्यह्नवेव द्युतिरुदयगते यत्र तन्मण्डलं वो**
**मार्तण्डीयं पुनीताद्दिवि भुवि च तमांसीव मुष्णन्महांसि ७६**

मार्तण्डीयं तन्मण्डलं वः पुनीतात्पवित्रयतु । तत्किम् । यत्र यस्मिन्नुदयगते उदयं प्राप्ते सत्येवं भवति । तदाह क इति । तारकाणां नक्षत्राणां कस्त्राता को वा रक्षकः न कोपीत्यर्थः । तथा इन्दुश्चन्द्रः तनुः सूक्ष्मः अवश्यायस्य हिमस्य रात्रौ घनीभूय दर्भाग्रे स्थितः बिन्दुर्यथा सूर्यतापेन द्रवीभूय भूमौ पतति तद्वत्पतति । पुनः स्मरारेः शिवस्य दृग् ललाटस्था वह्निरूपा विद्राणा भयाद्द्रुता हतप्रभेत्यर्थः । पुनर्मुररिपोः श्रीनारायणस्योरसि कौस्तुभो मणिरुद्गभस्तिरुद्गतदीप्तिर्न । पुनर्वह्नेर्द्युतिः सायाह्नवासतिरोधानेव । अतएव दिवि भुवि च महांसि तेजांसि मुष्णत् आच्छादयत् । कानीव तमांसीव । सहोपमयस्योदये तमसामिव तेजसामपि तिरोधानं भवतीत्यतितेजस्वीत्यर्थः । तदुक्तम् "रवेरेवोदयःश्लाघ्यः किमन्यैरुदितैरिह । न तमांसि न तेजांसि यस्मिन्नभ्युदिते सति" इति । अत्रान्योक्त्या सूर्यस्यातितेजस्विनः प्रभोरुत्कर्षो वर्णितः । "अवश्यायस्तु नीहारः" इत्यर्थः । विद्राणेति । द्राकुत्सायां गताविति धातोरकर्मकत्वात्कर्त्तरि क्तप्रत्यये संयोगादेरात इति निष्ठा तस्य नत्वे रूपम् ॥ ७६ ॥

अथ सप्तसप्ततितमं पद्यम्—

यत्प्राच्यां प्राक् चकास्ति प्रभवति च यतः प्राच्यसा-
वुज्जिहाना-
दिद्धं मध्ये यदह्नो भवति ततरुचा येन चोत्पद्यतेऽह्नः ।
यत्पर्यायेण लोकानवति च जगतां जीवितं यच्च तद्वो
विश्वानुग्राहि विश्वं सृजदहिमरुचो मण्डलं श्रेयसेऽस्तु ॥७७॥

अहिमरुचस्तन्मण्डलं वो मुक्तये श्रेयसे अस्तु । तत्किं यत्प्राक् पूर्वं प्राच्यां चकास्ति प्रादुर्भवति च पुनरसौ प्राची उज्जिहानादुदयमानाद्यस्मात्प्रभवति प्रकटीभवति। उदयति दिशि यस्यां भानुमान्सैव पूर्वेत्युक्तेः । पुनरह्नो मध्ये यदिद्धमतिदीप्तं भवति । च पुनस्तद्रूपविस्तारितकान्तिना येन अह उत्पाद्यते। अत्र प्राची सूर्यमण्डलयोर्दिनसूर्यमण्डलयोश्चान्योन्यं कार्यकारणभावोक्तिरद्भुतोक्तिः । पुनर्यत्पर्यायेण क्रमेण लोकान्सर्वानवति । समयभेदेन तत्र तत्र गत्वा रक्षति च । पुनर्यज्जगतां जीवितं जीवनरूपम् । पुनर्विश्वानुग्राहि विश्वानुग्रहणशीलम् । पुनर्विश्वं जगत्सृजदुत्पादयत् परमेश्वररुपत्वात् ॥ ७७ ॥

अथाष्टसप्ततितमं पद्यम्—

शुष्यन्त्यूढानुकारा मकरवसतयो मारवीणां स्थलीनां
येनोत्तप्ताः स्फुटन्तश्चटिति तिलतुलां यान्त्यगेन्द्रा युगान्ते ।
तच्चण्डांशोरकाण्डत्रिभुवनदहनाशङ्कया धाम कृत्स्नं
संहृत्यालोकमात्रं प्रलघु विदधतः स्तान्मुदे मण्डलं वः ॥७८॥

चण्डांशोः तन्मण्डलं वो मुदे स्तात् । कीदृशस्य अकाण्डे असमये यत् त्रिभुवनस्य दहनं तच्छङ्कया तद्भीत्या तत्कृत्स्नं समस्तं धाम संहृत्य प्रलघु अल्पतरं यथा भवत्येवं आलोकमात्रं प्रकाशमात्रं विदधतः । किं तत् । शुष्यतीति। युगान्ते प्रलयकाले येन धाम्ना उत्तप्ताः मकरवसतयो मकरालयाः समुद्राः शुष्यन्ति । कीदृशाः । मकरवसतयः मारवीणां मरुदेशसम्बन्धिनीनां स्थलीनामकृत्रिमभूमीनाम् । ऊढानुकाराः स्वीकृतानुकृतयः । पुनर्ये नोत्तप्ताश्चट-

तिशब्देन स्फुटन्तः । अगेन्द्राः तिलतुलां यान्ति तिला यथाऽग्निक्षिप्ताः चटितिस्फुटित्वा इतस्ततः प्रकीर्णा भवन्ति तद्वत् । चाटित्यनुकरणशब्दः । "समानौ मरुधन्वानौ" इत्यमरः । "आलोको दर्शनोद्योतौ" इति च । "काण्डोऽस्त्री दण्डवाणार्धवर्गावसरवारिषु" इति च ॥ ७८ ॥

अथैकोनाशीतितमं पद्यम्—

उद्यद्द्यूद्यानवाप्यां बहलतमतमःपङ्कपूरं विदार्य
प्रोद्भिन्नं पत्रपार्श्वेष्वविरलमरुणच्छायया विस्फुरन्त्या ।
कल्याणानि क्रियाद्वः कमलमिव महन्मण्डलं चण्डभानो-
रन्वीतं तृप्तिहेतो रसकृदलिकुलाऽकारिणा राहुणा यत् ॥७९॥

चण्डभानोः चण्डांशोः मण्डलं वः कल्याणानि क्रियात् । किमिव । महत्कमलमिव । विशषणैः कमलसाम्यमाह उद्यदित्यादि । द्योराकाशमेवोद्यानवापी तस्यामुद्यत् उद्भवत् । अत्रोद्यानं ब्रह्माण्डमण्डलं मनसि स्थितमध्याहार्यम् । आकाशमेवोद्यानमिति व्याख्यायमाने तस्य वापीस्थानीयम् किञ्चित्कल्पनीयम् । अन्यथा आलङ्कारिकसिद्धान्तव्याघातः स्यात् । किं कृत्वा । वहलतमो यः तमा-रूपः पङ्कपूरस्तं विदार्य कमलमपि पङ्कं विदार्य उद्यानव्याप्यामुद्भवति । पुनः कीदृशं मण्डलं प्रोद्भिन्नमिति । विस्फुरन्त्या अरुणच्छायया अरुणकान्त्या पत्राणां वाहनानां पार्श्वेषु अविरलं घनं यथाभवत्येवं प्रोद्भिन्नं प्रकटीभूतम् । कमलमपि पत्राणां दलानां पार्श्वेषु आरक्तकान्त्या प्रोद्भिन्नं भवति । पुनर्यद् अलिकुलाऽका-रिणा श्यामत्वेन भ्रमरसमूहानुकारिणा राहुणा *तृप्तिहेतोरसकृत्पुनः पुनरन्वी-तम् । कमलमपि तृप्त्यै असकृद्भ्रमरकुलैरन्वीतं भवति " पत्रं वाहनपक्षयोः " इत्यमरः । " छाया सूर्यप्रिया कान्तिः " इति च " अन्वीतमिति ईगतौ इत्यस्य-रूपम् " ॥ ७९ ॥

अथाशीतितमं पद्यम्—

चक्षुर्दक्षद्विषो यं न तु दहति पुनः पूरयत्येव कामं
नास्तं जुष्टं मरुद्भिर्यदिह नियमिनां यानपात्रं भवाब्धौ ।
यद्वीतश्रान्ति शश्वद् भ्रमदपि जगतां भ्रान्तिमभ्रान्ति हन्ति
ब्रध्नस्याव्याद्विरुद्धक्रियमथ च हिताधायि तन्मण्डलं वः ।८०।

---

* अत्र पानस्य इति शेषः

ब्रघ्नस्य तन्मण्डलं वोऽव्यात् । कीदृशं विरुपधक्रियं विरुद्धा क्रिया कार्यं यस्य तत् तथा । अथ च:हिताधायि जगतां हितकारकं विरुद्धक्रियं हिताधायीति विरोधः। तत्परिहारो विशेषणव्याख्यानेन ज्ञेयः। किं तत्। यद्दक्षद्विषो दक्षयज्ञध्वंसकस्य रुद्रस्य चक्षुः । तस्य परमेश्वरत्वे विराड्रूपत्वात् । सूर्यमण्डलस्य विराण्नेत्रत्वेन पुराणनिरूपणात् । तादृशमपि कामं तु न दहति। अपि तु पूरत्येव। तत्तुकामं स्मरं दहति । मण्डलपक्षे कामोऽभिलाषस्तामिति। पुनर्यन्नियमिनां नियमवतां सदाचाराणां भवाब्धौ संसारसमुद्रे यानपात्रं पोतः । कीदृशं मरुद्भिर्दैवैर्न अस्तं न क्षिप्तं अपि तु जुष्टम् सेवितम् । अन्यत्तु पानपात्रं मरुद्भिर्वायुभिः अस्यते प्रेर्यते। पुनर्यच्छश्वद् त्भ्रमदपि वीतश्रान्ति विगतश्रमम् । अभ्रान्तिभ्रमरहितं सत् जगतां भ्रांतिं भ्रमं अज्ञानं हन्ति। यद भ्रान्ति तद्भ्रमत्कथं यद्भ्रमत्तद्वीतश्रान्ति कथमित्यादिप्रकारेण विरुद्धक्रियमित्यर्थः । "कामः पञ्चशरः स्मरः। कामोभिलाषस्तर्षश्च"।"मरुतौ पवनाऽमरौ"।"यानपात्रं तु पोतः" इत्यामरः ॥ ॥ ८० ॥ इति मण्डलवर्णनम्॥

अथैकाशीतितमं पद्यम्—

**कोकानन्दाप्तिदक्षो नवनलिनवनी नित्यनिद्राविपक्षः**
**प्रह्वाणां कल्पवृक्षः कलिकलुषजले मज्जतां नौसदृक्षः ।**
**क्षोणीकक्षादिदक्षुः परिजनजनुषां वन्ध्यताजासरक्षुः**
**प्रातः शैलारुरुक्षुर्दिशतु तवशिवं सर्वलोकैकचक्षुः ॥ ८१ ॥**

अथ विंशतिपद्यैः श्रीसूर्यवर्णनम्

सर्वलोकैकचक्षुः श्रीसूर्यस्तव शिवं दिशतु। कीदृशः। कोकानां चक्रवाकाणामानन्दोसावानन्दप्रापणे दक्षः । तेषां विरहदुःखनाशकत्वात् । पुनः । नवा या नलिनवनी कमलवनसमूहः तस्या नित्यं निद्राय विपक्षः। पुनः प्रह्वाणां नम्राणां भक्तानां कल्पवृक्षः कामपूरकः । पुनः। कलिकलुषजले कलियुगजनितपापरूपजले मज्जतां जनानां नौसदृक्षः । तारकत्वान्नौकातुल्यः । पुनः। क्षौण्याः कक्ष्या मध्यभागः तददिदक्षुः कक्ष्या हर्म्यादिप्रकोष्ठः । अत्र लक्षणया कक्ष्याशब्देन मध्यभागो गृह्यते । पुनःऽपरिजनेति । परिजनाः भक्ताः तेषां जनूंषि जन्मानि तेषां वन्ध्यता निःफलता, सैव अजा छागी तस्यास्तरक्षुः । भुक्तिमुक्तिप्रदानेन

निजभक्तजन्मसाफल्यकारीत्यर्थः । तरक्षुश्चित्रमृगः । मध्यदेशभाषयाम् चीता इति प्रसिद्धः।"तरक्षुस्तु मृगादनः"इ।त कोषेऽभिहितः ।पुनः। प्रातः शैलमुदयपर्वतमारुरुक्षुः आरोढुमिच्छुः । अत्र च विचार्यमाणे सर्वलोकैकचक्षुरिति पदमेव विशेष्यस्थानीयं न तु विशेष्यम् । जगच्चक्षुरिति रूढनाम्नः प्रतिपदत्वमादायैतस्यैव विशेष्यत्वेऽनूच्यमाने पूर्वोक्तविशेषणपदेषु पुंस्त्वमसिद्धं स्यात् । सूर्यवाचकत्वेपि जगच्चक्षुःशब्दस्य क्लीवत्वाद् । वेदेऽपि चित्रं देवानामिति मन्त्रे मित्रावरुणाग्नीनां चक्षुःशब्देन अग्रे स्थावरजङ्गमजीवजातस्यात्मत्वेन च निरूप्य तदग्रे तच्चक्षुर्देवहितम् इति नपुंसकलिङ्गमेव तद्विशेषणमुक्तम् । अतोऽत्र श्रीसूर्य इति विशेष्यपदमध्याहार्यम् । इयमपि क्लिष्टकल्पना प्रक्षिप्तत्वद्योतिकाऽस्य [1]पद्यस्य । "कक्ष्या प्रकोष्ठे हर्म्यादेः"इत्यमरः । शैलारुरुक्षुरित्यत्र शैलमारुरुक्षुरिति विग्रहे गम्यादेरुपसङ्ख्यानमिति द्वितीयासमासः । उप्रत्यययोगे न लोकेति कर्मणि षष्ठीनिषेधात् षष्ठीसमासोन । आरुरुक्षुरिति । आङ्पूर्वकरुहः सन्नन्तात्सनाशंसीति उप्रत्यये रूपम् ॥ ८१ ॥

अथ द्व्यशीतितमं पद्यम्—

सिद्धैः सिद्धान्तमिश्रं श्रितविधि विबुधैश्चारणैश्चाटुगर्भं
गीत्या गन्धर्वमुख्यैर्मुहुरहिपतिभिर्यातुधानैर्यतात्म ।
सार्द्धं साध्यैर्मुनीन्द्रैर्मुदिततममनो मोक्षिभिः पक्षपातात्
प्रातः प्रारभ्यमाणस्तुतिरवतु रविर्विश्ववन्द्योदयो वः ॥८२॥

रविर्वो अवतु कीदृशः । सिद्धादिभिरेवंप्रातः प्रारभ्यमाणा स्तुतिर्यस्य सः । एवं कथं तदाह । सिद्धैः सिद्धान्तमिश्रं सिद्धान्तसहितं मुख्यतया स्तुत्यत्वेन निश्चित्येत्यर्थः । पुनः श्रितविधिविबुधैः श्रितो विधिर्ब्रह्मा विबुधा इन्द्रादयो यैः । इदृशैश्चारणैः देववन्दिभिः चाटुगर्भं चाटुप्रियवचनं गर्भे मध्ये तत्र अहिपतिभिर्वासुकिप्रमृतिभिः यातुधानैः राक्षसैश्च यतात्मा यतः संयतः आत्मा बुद्धिर्यस्तत्र एवं यथा भवत्येवम् । पुनः मुनीन्द्रैः साध्यैः सार्द्धं मुदितमनः । मुदितमतिहर्षितं मनो यत्रैवं यथा भवति तथा । पुनः मोक्षिभिः मुक्तिकामैः पक्षपातात् मुक्तिद्वारत्वात् । अत एवं विश्ववन्द्यः सर्वैः नमस्करणीय उदयो यस्य सः ॥८२॥

१ अतएव पुस्तकान्तरे अस्य श्लोकस्यानुपलम्भः

अथ त्र्यशीतितमं पद्यम्—

भासामासन्नभावादधिकतरपटोश्चक्रवालस्य तापा—
च्छेदादच्छिन्नगच्छत्तुरगखुरपुटन्यासनिश्शङ्कटङ्कैः ।
निस्सङ्गस्यन्दनाङ्गभ्रमणनिकषणात्पातु वस्त्रिप्रकारं
तप्तांशुस्तत्परीक्षापर इव परितः पर्यटन्हाटकाद्रिम् ॥ ८३ ॥

तप्तांशुर्वः पातु । किं कुर्वन् । हाटकाद्रिं मेरुं परितः मेरोः समंततः पर्यटन् । कथं भूत इव । एवं पूर्वोक्तप्रकारेण त्रिप्रकारं तस्य हाटकाद्रेर्या परीक्षा तत्पर इव । एवं कथं तदाह । भासामिति । आसन्नभावा निकटवर्तित्वेन अधिकतरं पटु तीक्ष्णं यत् तस्य भासां चक्रवालस्य मण्डलस्य तापात् । पुनः । अच्छिन्नं निरन्तरं गच्छन्तो ये तुरगाः तेषां खुरपुटन्तासास्त एव निःशंकानिर्विचाराः टङ्काअश्मदारणास्तैस्च्छेदात् । पुनः निःसङ्गं अश्रान्तं यत् स्पंदनाङ्गस्य चक्रस्य भ्रमणं तेन यन्निकषणं तस्मात् । सुवर्णपरीक्षा लोके प्रकारस्त्रयेण प्रसिद्धाः । तापच्छेदनिकषणैः सात्रोत्प्रेक्षिता । अधिकतरपुटोरित्यत्र भाषितपुंस्कत्वेन पुंवत्वान्नुमभावः । चक्रवालं तु मण्डलमित्यमरः । टंको दर्पाश्मदारणाविति च । हिरण्यं हेमहाटकमित्यपि । मेरुमित्यभितः परित इति द्वितीया ॥ ८३ ॥

अथ चतुरशीतितमं पद्यम्—

नो शुष्कं नाकनद्या विकसितकनकाम्भोरुहं भ्राजितं तु
प्लुष्टा नैवोपभोग्या भवति भृशतरं नन्दनोद्यानलक्ष्मीः ।
नो शृङ्गाणि द्रुतानि द्रुतममरगिरेः कालधौतानि धौता—
नीद्धं धाम द्युमार्गे म्रदयति दयया यत्र सोऽव्यादिनो वः॥८४॥

स इनः सूर्यो वोऽव्यात् । स कः यत्र यस्मिन् इने दयया इद्धं अतिदीप्तं धाम द्युमार्गे आकाशमार्गे म्रदयति मृदुकुर्वंति सति शृङ्गाणि द्रुतं नाकनद्याः स्वर्नद्याः । विकसितं प्रफुल्लं कनकाम्भोरुहं नो शुष्कमपि तु भ्राजितं शोभितम् । धाम्नः तीक्ष्णकरेण तु शुष्कमेव भवेदित्यर्थः । तथा नन्दनोद्यानलक्ष्मीः । नन्दनाख्यस्येन्द्रोद्यानस्य लक्ष्मीः शोभा प्लुष्टा न दग्धा नैव । अपि तु भृशतरमुपभोग्याजातेति शेषः । तथा अमरगिरेः मेरोः कालधौतानि कलधौतसम्ब-

न्धीनि शृङ्गाणि शिखराणि नोद्धुतानि तापवशान्नद्रवीभूतानि, अपि तु धौतानि कुङ्कुमद्रवेणेव क्षालितानि जातानि । म्रदयतीति मृदु करोतीत्यर्थे मृदुशब्दात्तत्करोतीति णिचिणौ प्रातिपदिकाद्धात्वार्थे बहु मिष्ठवच्चेतीष्ठवद्भावे ऋकारस्य रत्वे रूपम् ॥ ८४ ॥

अथ पञ्चाशीतितमं पद्यम्—

ध्वान्तस्यैवान्तहेतुर्न भवति मलिनैकात्मनः पाप्मनोऽपि
प्राक्पादोपान्तभाजां जनयति न परं पङ्कजानां प्रबोधम् ।
कर्ता निःश्रेयसानामपि न तु खलु यः केवलं वासरणां
सोऽव्यादेकोद्यमेच्छाविहतबहुबृहद्विश्वकार्योऽर्यमा वः ॥८५॥

सः अर्यमा वोऽव्यात् । स कः यः प्राकूलिनैकात्मनः ध्वान्तस्यैवान्तर्हेतुर्न भवति । अपि तु प्राप्मनः पापस्यापि । पुनः परं केवलं प्राक् पङ्कजानां प्रबोधं न जनयति अपि तु पादोपान्तभाजां सेवकानामपि। एकत्र प्रबोधो विकासः। अन्यत्र ज्ञानं । पुनर्यः केवलं वासराणां कर्ता न, अपि तु खलु निश्चयेन निःश्रेयसानामपि । अत एव एकोद्यमेच्छया एककार्योद्यमिच्छया विहितानि बहूनि बृहन्ति गुरूणि विश्वस्य जगतः कार्याणि येन सः तथा । अस्त्री पङ्कं पुमान्पाप्मा पापं किल्विषकल्मषं इत्यमरः ॥ ८५ ॥

अथ षडशीतितमं पद्यम्—

लोठं लोठं विचेष्टः श्रितशयनतलो निःसहीभूतदेहः
सन्देही प्राणितव्ये सपदि दश दिशः प्रेक्षमाणोन्धकारान् ।
निःश्वासायासनिष्ठः परमपरवशो जायते जीवलोकः
क्लेशेनेवान्यलोकाभ्युदयकृतिपरे यत्रसोऽर्कोऽवताद्वः ॥८६॥

सः अर्कः वः अव्यात् । सः कः यत्र यस्मिन्नर्के अन्यलोकाभ्युदयकृतिपरे। अन्यद्वीपदेशाभ्युदयकार्योत्सुके सति, जीवलोकः क्लेशेन विरहकष्टेनेव परमपरवशो जायते । कीदृशो जीवलोकः । लोठं लोठं लुठित्वा विचेष्टः सन् श्रितशयनतलः । पुनः । निःसहीभूतदेहः । अक्षमशरीरः । पुनः प्राणितव्ये जीवितव्ये

सन्देहवान् । पुनः सपदे दशदिशः अन्धकारान् अन्धकाररूपाः प्रेक्षमाणः । पुनः निश्वासकृतायासे निष्ठा स्थितिर्यस्य सः तथा। अत्र जीवलोकस्य रात्रौ सूर्यालोकाऽभावेन अन्धकारे निद्रितस्य, निद्रावस्था रविविरहमूर्छात्वेनोत्प्रेक्ष्यते । लोढं लोढम् इति लुढधातोराभीक्ष्ण्ये णमुल् । तस्मिन्नेव नित्यवीप्सयोरिति द्विरुक्तिः । अन्धकारानिति दिग्विशेषणत्वेप्यजहल्लिङ्गं पदम् । प्राणितव्ये सन्देहति । निद्रापि मृत्युतुल्यैवेति लोकोक्तिः । मृत्युस्तु दीर्घा निद्रा । इयं स्वल्पेति विशेष इति । अत्रेदं विचार्यते शोकशब्द इष्टमरणजन्यदुःखे शक्तः । अन्यलोकशब्देनापि परलोकविख्यातः । तेन अत्र विरुद्धार्थप्रतीतिदोषः । कविनात्वनुप्रासवशादेवं प्रयुक्तं अभ्युदयकृतिपदयोगेन सदोषोपि निवारितः रविविरह कष्टेन जीवलोक एवं जायत इत्येतावदेव कवेर्विवक्षितं, तथापि सहृदयानामिदं प्रीत्याधायकं न भवतीति । जीवलोकः क्लेशेनैवान्यदेशाभ्युदयकृतिपरे इतिपाठः साधीयान्प्रतिभाति ॥ ८६ ॥

अथ सप्ताशीतितमं पद्यम् ।

**क्रामँल्लोलोऽपि लोकाँस्तदुपकृतिकृतावास्थितः स्थैर्यकोटिं**
**नृणां दृष्टिं विजिह्मां विदधदपि करोत्यन्तरत्यन्तभद्राम् ।**
**यस्तापस्यापि हेतुर्भवति नियमिनामेकनिर्वाणदायी**
**भूयात्स प्रागवस्थाधिकतरपरिणामोदयोऽर्कः श्रिये वः ॥८७॥**

सः अर्कः वः श्रिये भूयात् । स कः। यः लोकान्क्रामन् लोलोपि तदुपकृतिकृतौ लोकोपकारकृतौ स्थैर्यकोटिस्थैर्यस्य पराकाष्ठाम् आस्थितः। स्वीकृतवान्। पुनः नृणां दृष्टिं विजिह्मां तेजसा प्रतिघातेन वक्रां विदधदपि । अन्तर्हृदयस्य मध्ये अत्यन्तभद्रां सूक्ष्मत्वावलोकसमर्थां करोति पुनर्यस्तापस्योष्मताया हेतुर्भवति । नियमिनां इन्द्रियसंयमवताम् एकोऽद्वितीयः। निर्वाणदायीति। मोक्षदातापि यो लोलः स स्थैर्यकोटिं कथमास्थितो भवति । यश्च दृष्टेर्जिह्मत्वं विधत्ते सोत्यन्तभद्रत्वं कथं विद्यते। योपि तापहेतुर्भवति स निर्वाणदायी कथं भवति इति विरोधः। तत्परिहारो व्याख्यायां स्पष्ट एव । कीदृशोऽर्कः प्रागिति प्रागवस्थायाः पूर्वावस्थायाः उत्तरोत्तरमधिकतरपरिणाम उदयो यस्य सः तथा। "अत्युत्कर्षाश्रयः कोटयः" इत्यमरः॥ ८७ ॥

अथाष्टाशीतितमं पद्यम्—

व्यापन्नर्तुर्न कालो व्यभिचरति फलं नौषधीर्वृष्टिरिष्टा
नेष्टैस्तृप्यन्ति देवा नहि वहति मरुन्निर्मलाभानि भानि ।
आशाः शान्ता न भिन्दन्त्यवधिमुदधयो बिभ्रति क्ष्माभृतः क्ष्मां
यस्मिन्त्रैलोक्यमेवं न चलति तपति स्तात्स सूर्यः श्रिये वः॥८८॥

स सूर्यो वः श्रिये स्तात् । स कः । यस्मिन् तपति सति त्रैलोक्यमेवं पूर्वोक्तप्रकारेण नियममर्यादायाः न चलति । एवं कथम् ? व्यापन्नेति । कालः व्यापन्नर्तुः व्यापन्नाः स्वकार्यातिक्रमेण ऋतवो यस्मिन्नीदृशो न भवति । तथा फलं कर्तृ ओषधीर्न व्यभिचरति । ओषधीषु तत्तत्फलमवश्यं भवतीत्यर्थः । पुनरिष्टा वाञ्छिता वृष्टिर्भवति । तथा देवा इष्टैः क्रतुकर्मभिर्न तृप्यन्ति इति न हि, अपि तु तृप्यन्त्येव । क्रतवो निरन्तरं भवन्तीत्यर्थः । मरुद्वायुर्वहति सदा । तथा भानि नक्षत्राणि निर्मलाभानि निर्मला आभा कान्तिर्येषां तादृशानि भवन्ति । पुनः आशा दिशः शान्ताः स्वच्छाः, उदधयोऽवधिं मर्यादां न भिन्दन्ति । क्ष्माभृतः पर्वताः क्ष्मां पृथ्वीं बिभ्रतीति । अप्यथ क्रतुः मेकष्टमित्यमरः ॥८८॥

अथैकोनवतितमं पद्यम्—

कैलासे कृत्तिवासा विहरति विरहत्रासदेहोढकान्तः
श्रान्तः शेते महाहावधिजलधि विना छद्मना पद्मनाभः ।
यागोद्योगैकतानो गमयति सकलं वासरं स्वं स्वयंभू-
र्भूरित्रैलोक्यचिन्ताभृति भरणविधौ यत्र भास्वान्स वोऽ-
व्यात्॥ ८९ ॥

सः भास्वान्वोऽव्यात् । स को यत्र यस्मिन्भूरि अधिकं यथाभवत्येवं भरणविधौ धारणपोषणकार्ये त्रैलोक्यचिन्ताभृति सति कृत्तिवासाः कैलासे विहरति नैश्चित्येन क्रीडति । कीदृशः विरहत्रासेन ऊढा कान्ता येन सः । पुनः पद्मनाभो विष्णुः श्रान्तः सन् अधिजलधि समुद्रमध्ये महाहौ शेषे छद्मना विना दैत्यदानवहननकापट्यं विहाय निश्चिन्तः शेते । पुनः स्वयंभूर्विधाता-

योगोद्योगैकतानो योगाभ्यासोद्यमतत्परः स्वं सकलं वासरमव्यग्रो गमयति नयति। त्रयाणामपि कार्यम् एको भास्वान्करोति इति तेषां नैश्चित्येनावस्थितिरित्यर्थः। एकतानोऽनन्यवृत्तिरित्यमरः ॥८९॥

अथ नवतितमं पद्यम्—

एतद्यन्मण्डलं खे तपति दिनकृतस्ता ऋचोऽर्चींषि यानि
द्योतन्ते तानि सामान्ययमपि पुरुषो मण्डलेऽणुर्यजूंषि ।
एवं यं वेद वेदत्रितयमयमयं वेदवेदी समग्रो
वर्गः स्वर्गापवर्गप्रकृतिरविकृतिः सोऽस्तु सूर्यः श्रिये वः॥९०॥

स सूर्यो वः श्रिये अस्तु। स कः। अयं वेदवेदी वेदार्थज्ञाता समग्रो वर्गः विद्वत्समूहोऽयम्। एवं प्रकारेण वेदत्रितयमयं वेदत्रयीरूपं वेद जानाति। एवं कथं तदाह। एतदित्यादि। दिनकृत एतन्मण्डलं खे तपति ता रुचोः यान्यर्चींषि तेजांसि तानि समानि द्योतन्ते प्रकाशन्ते। अयमपि पुरुषः "ध्येयः सदासवितृमण्डलमध्यवर्ती नारायणः" इति पुराणोक्त्या प्रत्यक्ष इव। वस्तुतस्तु अणुरतीन्द्रिय आत्मा तानि यजूंषि वर्तन्ते इति। तदुक्तम् तैत्तिरीयनारायणोपनिषत्सु "आदित्यो वा एष एतन्मण्डलं तपति तत्र ता रुचस्तदर्चिर्मण्डलः स रुचां लोकोथ य एष एतस्मिन्मण्डलेऽर्चिर्दीप्यते तानि साम्नां लोकोप्यय एष एतस्मिन्मण्डलेऽर्चिषि पुरुषस्तानि यजूंषि स यजुषा मण्डलः स यजुषां लोकः। सैषा त्रैय्येव विद्या तपति य एषान्तरादित्ये हिरण्मयः पुरुषः" इति। कीदृशः सूर्यः। स्वर्गापवर्गप्रकृतिः अविकृतिर्विकाररहिता। अन्या तु प्रकृतिः कार्योत्पत्त्यन्तरं विकारमापद्यते इयन्तु सदैकरूपा। समैर्वर्ग इति समूहविषये अमरः ॥ ९० ॥

नाकौकः प्रत्यनीकक्षतिपटुमहसां वासवाग्रेसराणां
सर्वेषां साधुपातां जगदिदमदितेरात्मजत्वे समेऽपि ।
येनादित्याभिधानं निरतिशयगुणैरात्मनि न्यस्तमस्तु
स्तुत्यस्त्रैलोक्यवन्द्यैस्त्रिदशमुनिगणैः सोंऽशुमाञ्छ्रेयसे वः ॥९१॥

सः अंशुमान्वः श्रेयसेऽस्तु । स कः । येन निरतिशयगुणैरादित्याभिधानमात्मनि न्यस्तं स्थापितम् । पतिव्रताशिरोमणेरदितेस्तादृश एव समर्थस्तेजस्वी पुत्रो योग्य इति स्वगुणैरितरव्यवच्छेदेन आदित्य इति मातृसम्बन्धि नाम आत्मनि रूढीकृतमित्यर्थः । कस्मिन्सति । सर्वेषां वासवाग्रेसराणां वासवोऽग्रेसरो येषां तेषामिन्द्रप्रमुखानां देवानामदितेरात्मजत्वे समेऽपि सति इन्द्रेऽपि आदित्यइति नाम रूढं नास्तीति भावः । कीदृशोंऽशुमान् । इदं जगत्साधु यथा भवत्येवं पाता रक्षणशीलः । तृन्प्रत्ययस्ताच्छील्ये । पुनः कीदृशः । त्रैलोक्यवन्द्यैस्त्रिदशमुनिगणैस्तुत्यः स्तोतुं योग्यः ॥९२॥

अथ द्विनवतितमं पद्यम्—

भूमिं धाम्नोऽभिवृष्ट्या जगति जलमयीं पावनीं संस्मृताव-
प्याग्नेयीं दाहशक्त्या मुहुरपि यजमानात्मिकां प्रार्थितार्थैः ।
लीनामाकाश एवामृतकरघटितां ध्वान्तपक्षस्य पर्व
ण्येवं सूर्योऽष्टभेदां भव इव भवतः पातु बिभ्रत्स्वमूर्तिम् ॥९२॥

सूर्यो भवतो युष्मान्पातु । कीदृशः । एवमष्टभेदां स्वमूर्त्तिं बिभ्रत् । क इव । भवो रुद्र इव । एवं कथं तदाह भूमिमित्यादि । कीदृशीं भूमिं । धाम्नस्तेजसो भूमिं स्थानं पृथ्वीं च पुनर्जगति अभिवृष्ट्या जलमयीम् । पुनः संस्मृतावपि पावनीं पवित्रयित्रीम् । वायवीं च पुनर्दाहशक्त्या आग्नेयीमग्निसम्बन्धिनीम् । मुहुः प्रार्थितार्थैः याचकानामभ्यर्थितार्थदानैर्यजमानात्मिकाम् । पुनराकाशे एव लीनां निरन्तरस्थिताम् । आकाशरूपामित्यर्थः । पुनर्ध्वान्तपक्षस्य कृष्णपक्षस्य पर्वण्यमावास्याम् । अमृतकरेण घटितां युक्तामिति । अर्थान्तरे तेन घटितां निर्मिताम् । अष्टमी मूर्त्तिः स्वयमेवेति क्षितिजलपवनहुताशनयजमानाकाशसोमसूर्याख्याः पुराणेषु भवस्याष्टौ मूर्त्तयः प्रसिद्धाः श्रीसूर्योऽपि तत्तुल्यत्वादष्टमूर्तीर्बिभ्रदित्यर्थः । अत्र क्वचिल्लक्षणया क्वचित् श्लेषेण क्वचिद्वक्रोक्त्या क्वचिद्वस्तुगत्या अष्टौ मूर्त्तयः सूर्यस्य निरूपिता इति चमत्कृतिः ॥ ९२ ॥

अथ त्रिनवतितमं पद्यम्—

प्राक्कालोन्निद्रपद्माकरपरिमिलनाविर्भवत्पादशोभो
भक्त्यात्यक्तोरुखेदोद्गति दिवि विनतासूनुना नीयमानः ।

सप्ताश्वाप्तापरान्तान्यधिकमधरयन्यो जगन्ति स्तुतोऽलं
देवैर्देवः स पायादपर इव मुरारातिरह्नां पतिर्वः ॥ ९३ ॥

अह्नां पतिर्देवः स सूर्यो वः पायात् । क इव । अपरो मुरारातिर्विष्णुरिव । कीदृशोऽह्नाम्पतिः । प्रागिति । प्राक्काले प्रातःकाले उन्निद्रा विकसिता ये पद्माकरास्तैः परिमिलिनादाविर्भवन्ती पादेषु रश्मीषु शोभा यस्य स तथा । मुरारिरपि प्राक्काले पूर्वकाले उन्निद्रा पतिव्रतात्वात्पत्युः पूर्वं प्रबुद्धा या पद्मा लक्ष्मीः तस्याः कराभ्यां परिमिलनात्संवाहनसम्बन्धादाविर्भवन्तीपादयोः शोभा यस्य स तथा पुनर्भक्त्या ऊरुभ्यां हेतुभ्यां या खेदाद्गतिः खेदोदयः सा यत्रैवं यथाभवति तथा विनता सूनुना अरुणेन नीयमान इत्यर्थः । मुरारिस्तु भक्त्या त्यक्तो य ऊरुर्महान्खेदोद्गतिरुच्चैर्गमनम् यत्रैवं यथाभवत्येवं विनतासूनुना गरुडेन नीयमान ऊह्यमानः । पुनः कीदृशः । सप्तेति । यः सप्तभिरश्वैराप्ताः प्राप्ताः अपरान्ताः येषां तानि जगन्ति भुवनान्यधिकं यथाभवत्येवमधरयन्नुच्चैर्गमनेनाधःकुर्वन् । मुरारिश्च आप्ताः प्राप्ता अपरांता येषां तानि सप्तजगन्ति भुवनान्यधिकमाशु शीघ्रं धारयन् सोत्कर्षेणाधःकुर्वन् । विराड्रूपेण भुवनानि व्याप्य तिष्ठन्नित्यर्थः । पादा रश्म्यंघ्रितुर्यांशा इत्युक्तं प्रागेव ॥ ९३ ॥

अथ चतुर्नवतितमं पद्यम्—

यः स्रष्टापां पुरस्तादचलवरसमभ्युन्नतेर्हेतुरेको
लोकानां यस्त्रयाणां स्थित उपरि पदे दुर्विलङ्घ्येन धाम्ना ।
सद्यः सिद्धयै प्रसन्नद्युतिशुचिचतुराशामुखः स्ताद्विभक्तो
द्वेधा वेधा इवाविष्कृतकमलरुचिः सोऽर्चिषामाकरो वः ॥९४॥

अर्चिषां तेजसामाकरः श्रीसूर्यो वो युष्माकं सिद्धये कार्यसाधनाय सद्यः स्तात् । क इव । अपरो वेधा विधातेव । स कः । यः पुरस्तादपां स्रष्टा । रश्मिभिर्द्रष्टिकरणात् । कीदृशो वेधाः । यः पुरस्तात्सृष्टेः पूर्वमपां स्रष्टा । अत एव सस-र्जादाविति पुराणोक्तेः । पुनः अचला अविनाशिनो ये वरास्तदत्समभ्युन्नतेरेकोमुख्यो हेतुर्भक्तानां निश्चलवरदाताऽवेधा अपि अचलवराः कुलाचलास्तेषां समभ्युन्नतेरेको हेतुः । तत्स्रष्टेत्यर्थः । पुनर्यः दुर्विलङ्घेन धाम्ना तेजसा त्रयाणां

लोकानामुपरिपदे आकाशे स्थितः। वेधास्तु दुर्विलङ्घ्येनानतिक्रमणीयेन धाम्ना स्थानेन सत्यलोकाख्येन त्रयाणां लोकानामुपरि पदे स्थाने स्थितः। पुनः कीदृशः। प्रसन्नद्युतीनि शुचीनि पवित्राणि चतुराशामुखानि दिक्चतुष्टयमुखानि यस्मात्स वेधाः। कीदृक्। प्रसन्नद्युतीनि शुचीनि चत्वारि आशामुखानि दिगवच्छिन्नमुखानि यस्य तथा । प्रसन्नद्युतिः शुचिचतुर्मुख इत्यर्थः । प्रतिदिशमवलोकनेन ब्रह्मणश्चत्वारि मुखान्यासन्निति पुराणेषूक्तम् । पुनः कीदृशः । द्वेधा विभक्तः । मण्डलरूपेण वेधा अपि द्वेधास्त्रीपुरुषरूपेण शतरूपामनुरूपेण विभक्तः । सृष्टिवृद्ध्यर्थं स्त्रीपुरुषेणाविर्भूत इतिपुराणोक्तेः । पुनः कीदृशः । आविष्कृता कमलानां रुचिः कान्तिर्येन स तथा। वेधास्तु अविष्कृता कमले रुचिः प्रीतिर्येन स तथा ।कमलासनत्वात्। "देवाद्वते वरः श्रेष्ठे त्रिषु क्लीवं मनाक् प्रिये" इत्यमरः । गृहदेहत्विट्प्रभावामानीत्यपि। अभिष्वंगे स्पृहायाञ्च गभस्तौ च रुचिः स्त्रियामिति च। भूमिं धाम्नः प्राकालोन्निद्र—यःस्रष्टा इतिश्लोकत्रये क्रमेण श्रीसूर्यस्य शिवविष्णुब्रह्मसाम्यं वर्णितम् ॥ ९४ ॥

अथ पञ्चनवतीतमं पद्यम्—

**साद्रिद्यूर्वीनदीशा दिशति दश दिशो दर्शयन्प्राग्दशोर्यः**
**सादृश्यं दृश्यते नो सदृशशतदृशि त्रैदशे यस्य देशे ।**
**दीप्तांशुर्वः स दिश्यादशिवयुगदशादर्शितद्वादशात्मा**
**शंशास्त्यश्वांश्च यस्याशयविदतिशयं दन्दशूकाशनाद्यः ॥९५॥**

सदीप्तांशुर्वः शं शिवं दिश्यात्। स कः। यः दृशोर्नेत्रयोः अद्रयः द्यौराकाश ऊर्वी नदीशाः समुद्राश्च तैः सहिता दश दिशः प्राक् दर्शयन्। दिशति द्रष्टुं ददाति । पुनः दशशतं सहस्रं दृशो यस्य सहस्रदृगिन्द्रस्ततसहिते त्रैदशे त्रिदशसंबन्धिदेशे स्वर्गे यस्य सादृश्यं नो दृश्यते। कीदृशो दीप्तांशुः । अशिवाऽमङ्गला या युगस्य दशा अवस्था महाप्रलयसमयस्तस्यां दर्शिता द्वादश आत्मानो येन स तथा। पुनर्यस्याऽतिशयमधिकं यथा स्यात्तथा आशयविदभिप्रायज्ञाता दन्दशूकाः सर्पा अशनं यस्य स गरुडस्तस्याद्यो ज्येष्ठभ्राता अरुणः अश्वान् शास्ति प्रेरयति। मन्दगमनेच्छायां मन्दं शीघ्रगमनेछायां शीघ्रमश्वान्प्रेरयतीत्यर्थः। अथातिशयो भर इत्यमरः। अतिशयशब्दस्य द्रव्यवाचकत्वे वाच्यलिङ्गत्वात् क्रियाविशेषणत्वम्। अत्र शकारानुप्रासः॥ ९५॥

अथ षण्णवतितमं पद्यम्—

तीर्थानि व्यर्थकानि ह्रदनदसरसीनिर्झराम्भोजिनीनां
नोदन्वन्तो नुदन्ति प्रतिभयमशुभं श्वभ्रपातानुबन्धि ।
आपो नाकापगाया अपि कलुषमुषो मज्जतां नैव यत्र
त्रातुं यातेऽन्यलोकान्स दिशतु दिवसस्यैकहेतुर्हितं वः ॥९६॥

स दिवसस्य एको मुख्यो हेतुः सूर्यो वो हितं दिशतु । स कः । यत्र यस्मिन्नन्यलोकान्द्वीपान्तराणि त्रातुं याते सति ह्रदा नदाः सरस्यः निर्झराः अम्भोजिन्यो दीर्घिकाश्च तासां तीर्थानि ऋषिजुष्टजलानि व्यर्थकानि व्यर्थानि । बहुव्रीहौ समासान्तः कप्प्रत्ययः । तथा उदन्वतीः श्वभ्रपातानुबन्धिनरकपतनकारि प्रतिभयं भयङ्करमशुभं पापं न नुदन्ति न दूरीकुर्वन्ति । तथा नाकापगाया गङ्गाया अप्यापो मज्जतां स्नानं कुर्वतां जनानां कलुषमुषः पापहर्त्र्यो नैव । दिवैव स्नानाऽधिकारात्सूर्यं विना तीर्थादीनां पापहरणसामर्थ्यं नास्तीत्यर्थः ॥ ९६ ॥

अन सप्तनवतितमं पद्यम्—

एतत्पातालपङ्कप्लुतमिव तमसैवैकमुद्गाढमासी-
दप्रज्ञाताप्रतर्क्यं निरवगति तथालक्षणं सुप्तमन्तः ।
यादृक्सृष्टेः पुरस्तान्निशि निशि निखिलं जायते तादृगेव
त्रैलोक्यं यद्वियोगादवतु रविरसौ सर्गतुल्योदयो वः ॥९७॥

असौ रविर्वोऽवतु । असौ कः । एतन्निखिलं त्रैलोक्यं सृष्टेः ब्रह्मसृष्टेः पूर्वं पातालपङ्कप्लुतमिव पातालस्थितपङ्के मग्नमिव । तमसा अन्धकारेणैव एकमेकरूपं उद्गाढं व्याप्तमासीत् । अप्रज्ञातमप्रतर्क्यं च विशेषतर्कशून्यम् । तथा निरवगति अचिन्त्यगति ज्ञानरहितम् । तथा अलक्षणम् । चिन्हरहितम् :। अन्तःसुप्तं सुप्तप्रायं च यादृगासीत् । यद्वियोगान्निशि निशि तादृगेव जायते । कीदृशो रविः । सर्गतुल्यः सृष्टितुल्यः उदयो यस्य स तथा .। निशि यद्वियोजात् मलीनं प्रातर्यदुदये नवीनं सृष्टमिव त्रैलोक्यं भवतीत्यर्थः । उद्गाठमिति उत्पूर्वकस्य गाहू विलोडन इतिधातोः कर्मणि क्तप्रत्यये रूपम् ॥ ९७ ॥

अथाष्टनवतितमं पद्यम्—

द्वीपे योऽस्ताचलोऽस्मिन्भवति खलु स एवापरत्रोदयाद्रि-
र्या यामिन्युज्ज्वलेन्दुद्युतिरिह दिवसोऽन्यत्र तीव्रातपः सः।
यद्वश्यौ देशकालाविति नियमयतो नो तु यं देशकाला—
वव्यात्स स्वप्रभुत्वाहितभुवनहितो हेतुरह्नामिनो वः ॥९८॥

स इनः सूर्यो वोऽव्यात्। स कः। द्वीप इति। अस्मिन्द्वीपे योऽस्ताचलः स एव खलु अपरत्र द्वीपान्तरे उदयाद्रिर्भवति। इह द्वीपे उज्ज्वलेन्दुद्युतिर्या यामिनी। अन्यत्र द्वीपे स एव तीव्रातपो दिवस इति देशकालौ यद्वश्यौ यस्य। सूर्यस्य वश्यौ मेरोः समन्ततः सूर्यान्तर्धानदर्शनाभ्यामस्तोदयरात्रिदिनव्यवहारात्। पुनर्देशकालौ तु यं नो नियमयतः न वशीकुरुतः। श्रीनारायणरूपत्वेन देशकालाऽपरिछेद्यत्वात्। कीदृश इनः। स्वप्रभुत्वेनाहितं कृतं भुवनानां हितं येन स तथा। यतोह्नां हेतुरुत्पत्तिकारणम्। इनः सूर्ये प्रभावित्यमरः॥ ९८॥

अथ नवनवतितमं पद्यम्—

व्यग्रैरग्र्यग्रहोडुग्रसनगुरुभरैर्नो समग्रैरुदग्रैः
प्रत्यग्रैरीषदुग्रैरुदयगिरिगतो गोगणैर्गौरयन्गाम्।
उद्गाढार्चिर्विलीनामरनगरनगग्रावगर्भामिवाह्ना—
मग्रे श्रेयो विधत्ते ग्लपयतु गहनं स ग्रहग्रामणीर्वः ॥९९॥

सः ग्रहग्रामणीः ग्रहश्रेष्ठो ग्रहपतिर्वो ग्रहसङ्कटं ग्लपयतु क्षपयतु। स कः यः अह्नामग्रे अग्रे उदयगिरिगतः गोगणैः किरणसमूहैर्गां दिवं गौरयन् अरुणयन्। पश्चात्किञ्चिदग्रे चलन्। उद्गाढानि तीक्ष्णानि यान्यर्चींषि तेजांसि तैर्विलीना द्रवीभूता ये अमरनगरस्य स्वर्गस्य नगः पर्वतो मेरुस्तस्य ग्रावाणः स्वर्णपाषाणास्ते गर्भे यस्याः एवं भूतां विधत्ते करोति। किञ्चित्सीतां करोतीत्यर्थः। कीदृशैर्गोगणैः। अग्राणि श्रेष्ठानि यानि ग्रहोडूनि ग्रहनक्षत्रादीनि तेषां ग्रसनेन ये गुरुभराः। आहारगौरवाणि तैर्व्यग्रैराकुलैः। येऽत्याहारं कुर्वन्ति ते आहारगौरवाद् व्यग्रा भवन्तीति लोकस्थितिः। पुनः कीदृशैः। समग्रैः कृत्स्नैः उदग्रैरुद्भटैः नो

किन्तु प्रत्यग्रैरभि न वैरीषदुष्णैः । किरणेषु प्रातरीषदुदयवशादप्रौढत्वमाहार-गौरवजनितव्यग्रत्वेन उत्प्रेक्ष्यते । व्यग्रो व्यासक्त आकुले । पराध्यांग्रप्राग्रहर-प्राग्र्याग्र्याग्रीयमाग्रियम् । स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः । गौरोऽरुणे सिते पीते । ग्रामणीर्नीपिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु इत्याद्यमरः । अत्र गकारे रेफानुप्रासः ॥ ९९ ॥

अथ शततमं पद्यम्—

योनिः साम्नां विधाता मधुरिपुरजितो धूर्जटिः शङ्करोऽसौ
मृत्युः कालोऽलकायाः पतिरपि धनदः पावको जातवेदाः ।
इत्थं संज्ञा डवित्थादिवदमृतभुजां या यदृच्छाप्रवृत्ता-
स्तासामेकाऽभिधेयस्तदनुगुणगणैर्यस्स सूर्योवताद्वः ॥ १०० ॥

स सूर्यो वोऽवतात् । स कः । इत्थं पूर्वोक्तप्रकारेण अमृतभुजां विधात्रादीनां देवानां या संज्ञा डवित्थादिवत् डिवित्थडित्थादिशब्दवत् । यदृच्छा प्रवृत्ताः अर्थं विनैव स्वेच्छया कल्पिताः । यः सूर्यस्तदनुगुणगुणैस्तासां संज्ञानामनुगुणा अन्विता ये गुणाः । सामयोनित्वादयैस्तै स्तासां संज्ञानामेकोऽभिधेयो वाच्यः । तेषु प्रत्येकमेकैका संज्ञा यदृच्छा प्रवृत्ता । अत्र एकस्मिन्नेव सर्वास्ता अन्वर्थाश्चेत्यर्थः । इत्थं कथं तदाह योनिरिति । विधाता साम्नां योनिरुत्पत्तिस्थानम् । सामयोनिरिति विधातुः संज्ञा । तथा मधुरिपुर्विष्णुरजित इति संज्ञा । धूर्जटिः रुद्रः शंकरः । धूर्जटेः शंकर इति संज्ञा । मृत्युः कालः । मृत्योः काल इतिसंज्ञा । पावकोऽग्निर्जातवेदाः । जातं वेदो धनं स्वर्णरूपं यस्मादिति जातवेदा इतिपावकस्य संज्ञा । विष्णावप्यजिताऽव्यक्तावित्यमरः । वेदशब्दो धनवाची वेदनिघण्टौ । यदृच्छास्वैरितेत्यमरः ॥ १०० ॥

अथैकोत्तरशततमं पद्यम्—

देवः किं बान्धवः स्यात्प्रियसुहृदथवाऽऽचार्य आहोस्विदर्यो
रक्षाचक्षुर्नुदीपो गुरुरुतजनको जीवितं जीवमोजः ।
एवं निर्णीयते यः किमिव न जगतां सर्वदा सर्वदोऽसौ
सर्वाकारोपकारी दिशतु दशशताभीषुरभ्यर्थितं वः ॥ १०१ ॥

असौ दशशताभीषुः दशशताभीषवो रश्मयः यस्य सः सहस्रांशुः वः अभ्यर्थितं वाञ्छितं दिशतु। असौ कः एवं पूर्वोक्तप्रकारेण देवादिषु जगतामयं किमिव वस्तु, एवं न निर्णीयते। तमेव निश्चयमाह देव इत्यादि। सूर्यो जगतां किं देवः पूज्यः स्यात्। अथवा बान्धवः स्वजनः। अथवा प्रियसुहृद् निष्कारणहितकारी। किं वा आचार्यो वेदमन्त्राध्यापकः। आहोस्वित् अर्थः स्वामी। किं वा, रक्षा कवचादिः। चक्षुः पदार्थदर्शनात्। नेत्रं नु दिवसस्य प्रकाशकारित्वात्। उत गुरुः शास्त्राद्यध्यापकः। उत अथवा जनकः पिता जगदुत्पादकत्वात्। जीवितं प्राणाः किम्। बीजमादिकारणं किम्। किमोजस्तेजो बलं वा। कथम्भूतः। सर्वदा सर्वदः सर्वं पदार्थं ददातीति तथा। पुनः कीदृशः। सर्वाकारोपकारी सर्वाकारेण देवादिस्वरूपेणोपकर्ता। किमिवेति। सामान्ये नपुंसकम्। इवशब्दोऽनवधारितार्थे। क्वचित्क इवेति पाठः। "मन्त्रव्याख्याकृदाचार्यः" इत्यमरः। "अर्यः स्वामिवैश्ययोः"। "ओजो दीप्तौ बले" इति चामरः। "अभीषुः प्रग्रहे रश्मौ" इति च ॥ १०१ ॥

अथ द्विशततमं पद्यम्—

श्लोका लोकस्य भूत्यै शतमिति रचिताः श्रीमयूरेण भक्त्या
युक्तश्चैतान्पठेद्यः सकृदपि मनुजः सर्वपापैर्विमुक्तः।
आरोग्यं सत्कवित्वं मतिमतुलबलं कान्तिमायुःप्रकर्षं
विद्यामैश्वर्यमर्थं सु[ख]तमपि लभते सोऽत्र सूर्यप्रसादात् ॥ १०२ ॥

श्रीमयूरेण सूर्यप्रसादात्समस्तसौभाग्यलक्ष्मीयुक्तेन मयूरकविना इत्यमुनाप्रकारेण शतं श्लोका लोकस्य संसारिणः भूत्यै सकलसम्पदे रचिताः। श्रीसूर्यप्रसादनाय निर्मिताः। यश्च मनुजो भक्त्या युक्तः सकृदपि एतान् पठेत्। स सर्वपापैर्विमुक्तः सन् सूर्यप्रसादादत्र लोके आरोग्यं सत्कवित्वं, मतिम्, अतुलबलं, कान्तिं सौन्दर्यम्, आयुः पुरुषायुषं, प्रकर्षं सर्वोत्कृष्टत्वम्, विद्याम्, ऐश्वर्यम्, अर्थं धनं, सुखं स्रक्चन्दनादिभोगजन्यं, तदपि लभेत्। परममक्षय्यं फलं लभत इति शेषः ॥ १०२ ॥

पुस्तकेषु बहुष्वत्र दृष्ट्वा पाठाननेकधा।
विनिश्चत्याकरं पाठं ग्रन्थोऽयं विवृतो मया ॥ १ ॥
श्रीसूर्यपद्यशतकं न गुरोरधीतमेतन्मयास्य विवृतिर्न च काप्यलोकि।
न्यूनाधिकं यदिह किञ्चन जल्पितश्चेत्तच्छोधयन्तु सुधियः करुणार्द्रचित्ताः ॥२॥

साधूनां कृपया भूयादाचन्द्रार्कप्रवर्तिनी ।
श्रीसूर्यशतकस्यात्र टीकेयं भावबोधिनी ॥ ३ ॥
श्रीमद्वल्लभदीक्षितोद्भजनुषः श्रीविठ्ठलेशप्रभोः
सप्तानां तनुजन्मनां सुकृतिनां पुत्राश्च पौत्रा अपि ।
तत्पुत्राश्च तदङ्गजाश्च सततं श्रीकृष्णसेवारताः
श्रौतस्मार्तविधिस्थिताः कृतधियो राजन्ति यत्रेन्द्रवत् ॥४॥
श्रीसू ॑जातटभुवं प्रथितं पृथिव्यां
तद्गोकुलं नगरमस्ति बृहद्वनान्तम् ।
तद्वासिना विरचिता मधुसूदनेन
टीकामयूरशतकस्य रविप्रसादात् ॥ ५ ॥
पद्यानां शतकं मयूरकविना सूर्यस्तुतौ यत्कृतं
शब्दार्थादिगुणोत्तरं सहृदयस्वान्तेषु हर्षप्रदम् ।
तद्व्याख्यां चतुराननो रचयितुं शक्तः परं तन्मया
भक्तेराश्रयणेन वर्णितमिति प्रीणातु सोऽर्कस्ततः ॥ ६ ॥
गौरीशभूमिधरशीतकरैर्मितेऽब्दे १७११
श्रीविक्रमार्कसमयादिह वर्तमाने ।
माघे सितेस्मरतिथौ १३ विबुधेज्यवारे
ग्रन्थः समाप्तिमगमद् बुधयोग्य एषः ॥ ७ ॥

॥ इति श्रीमत्पञ्चनदान्वयभूषणमाधवभट्टतनुजन्मन आत्रेयबालकृष्ण-भट्टप्रियशिष्यस्य मधुसूदनस्य कृतिरियं मयूरशतकव्याख्या भावबोधिनी समाप्ता ॥



# श्लोकानां सूचीपत्रम्

---

